मोहमात्रमपसार्यते। यश्चायं मोहस्तदपसारणं च यत्, तदुभयमपि भगवत एव विजृम्भामात्रं, न तु अधिकं किंचित्—इत्युक्तं वक्ष्यते च ॥ ३ ॥

ननु परिदृश्यमाने भावराशौ किमीया शक्तिराविष्क्रियते कं च प्रति? इति, जडानां तावत् न ज्ञानात्मिका शक्तिरस्ति, क्रियात्मिकापि स्वातन्त्र्यप्राणा स्वातन्त्र्यव्यपगमाद् असंभावनाभूमिरेव; तथा च रथो गच्छति—इत्यादौ उपचारं केचन प्रतिपन्नाः, न च जडान्प्रति व्यवहारसाधनम् उचितम्; अथ अजडजीवज्जनताधिकारेण उभयमपि, तर्हि सर्वस्य स्वात्मा महेश्वर—इति दूरतरं विप्रकर्षिता प्रत्याशा, तदेतद् आशङ्क्य निरूपयति—

तथाहि जडभूतानां प्रतिष्ठा जीवदाश्रया।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम् ॥ ४ ॥

'तथाहि' इति युक्त्युपक्रमं द्योतयति, दृश्यतां किल इत्यर्थः। 'तथा' इत्यनेन साध्यं सूच्यते, 'हिना' हेतुरित्यन्ये, प्रकृतं साध्यं हेतुसिद्ध्यायत्तमुपक्रम्यते इत्यर्थः। तेन इति बुद्धिवर्तिना, अत एव स्मर्यमाणेन ग्रन्थेन वर्णयिष्यमाणेन प्रकारेण यस्मात् सर्वमेतद् युक्तम् इति 'तथाहि' इति शब्दस्य वार्थः। इह तावत् भावराशिर्यथा विमृश्यते तथा अस्ति, अस्तित्वस्य प्रकाशं शरणीकुर्वतः

जायेगा, मात्र मोह दूर करना ही इसका कार्य है। अब जिज्ञासा होती है कि यह क्या वस्तु है? और उसे कहाँसे हटाना है? ये दोनों ही भगवान् की इच्छा का कार्य है—इससे अधिक कोई चीज नहीं है—इस विषय में हम कह भी चुके हैं और आगे भी कहेंगे ॥ ३ ॥

अब शंका करते हैं कि दिखलाई देने वाली जो भाव राशियाँ हैं उनमें कौन सी शक्ति आविर्भूत की जाती है और किसके प्रति की जाती है? यदि जड-पदार्थों को लेकर कहते हो; तो जड-पदार्थों में थोड़ी सी भी ज्ञानशक्त नहीं रहती है, क्रियात्मक शक्ति जिसका परम स्वातंत्र्य 'जीवन' माना जाता है, स्वातंत्र्य के न रहने से तो उसकी सम्भावना ही नहीं की जा सकती है; जैसा कि 'रथो गच्छति' रथ जाता है, इससे रथ में गमनात्मक क्रिया का रहना असम्भव है क्योंकि रथ जड पदार्थ है; कुछ लोग रथ पर बैठे हुए की भी क्रिया को स्वीकार करते हैं और जड-पदार्थों का व्यवहार होता हुआ देखा भी नहीं जाता और समुचित भी नहीं है; चेतन जीवित हुए जीवों के ही अधिकार द्वारा ये दोनों प्रकार के कार्य होते हैं तब तो फिर सबकी आत्मा महेश्वर है, ऐसी आशा करना बहुत दूर की बात हो जायेगी, इस पर आशङ्का कर विवेचन करते हैं—

इसलिए वैसा ही सिद्ध होता है कि जडभूतों की प्रतिष्ठा जीवित जीवों के आश्रित होती है। ज्ञान और क्रिया जीवित प्राणियों का जीवन है—ऐसा माना जाता है ॥ ४ ॥

'तथाहि' इस शब्द से युक्ति का उपक्रम द्योतित हो रहा है, दृढ़ता पूर्वक देखो—ऐसा इसका भावार्थ निकलता है। 'तथा' इससे साध्य सूचित होता है 'हिना' इस शब्द के द्वारा हेतु सूचित होता है दूसरे लोगों की ऐसी मान्यता है, प्रकृत जो साध्य है वह हेतु सिद्धि के अधीन है इसलिए हम उसका उपक्रम करते हैं 'तेन' यह बुद्धि में रहने वाले होने के कारण है, इसलिए आगे स्मरण किये जाने वाले ग्रन्थ के द्वारा यह वर्णन समुचित है ऐसा 'तथाहि' शब्द का विकल्प अर्थ है यहाँ पर भाव राशि का जैसा विचार किया जाता है वैसा ही है क्योंकि अस्तित्व के प्रकाश का

प्रकाशप्राणितदेशीयं विमर्शम् आश्रित्य समुन्मेषात्, अविमृष्टं हि यदि वस्तु तन्न नीलं न पीतं न सत् न असदिति, कुत ?—इति पर्यनुयोगे किम् उत्तरं स्यात्। तेन यद् यथा यावत् अबाधितं विमृश्यते तत् तथा तावत् अस्ति, तत एव देशकालाकारविततात्मानोऽपि द्रव्यक्रियासंबन्धादयः एकत्वेन परमार्थसन्त–इति वक्ष्यते 'क्रिया संबन्धसामान्य (२ आ० २ आ० १ श्लो०)।' इत्यादिना,

ततश्च विततमपि इदं विश्वं संक्षेपविमर्शदशाधिरोहे जडं जीवच्च—इत्येतावता द्वयरूपेण अस्ति। तत्र जडा अपि विमृश्यमाना न स्वतन्त्रा भवन्ति, विमृश्यमानता हि तेषां न स्वशरीरविश्रान्तः कोऽपि धर्मः जडत्वाभावप्रसंगात्, मम नीलं भाति मया नीलं ज्ञायते इति। तेषां 'जडभूतानां चिन्मयत्वेऽपि मायाख्यया ईश्वरशक्त्या जाड्यं प्रापितानां 'जीवन्तं' प्रमातारमाश्रित्य 'प्रतिष्ठा' तत्प्रमात्राभिमुख्येन अवस्थानं, ततो जडा नाम न पृथक् सन्ति। यथोक्तं ग्रन्थकृतैव 'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी। जडाः..............................।।'

इति। स एव हि स्वात्मा सन् वक्तव्यो यस्य अन्यानुपाहितं रूपं चकास्ति; न च भारूपानुपाहितं जडं नाम किञ्चित्, तेन जडानां हि शक्तिराविष्क्रियते जडान्प्रति—इत्येतत् तावत् निरुत्थानमेव। ये तु अन्ये जडेभ्यो जीवन्त—इति नाम प्रसिद्धाः तेषामपि शरीरप्राणपुर्यष्टकशून्याकाराः तावत् जडा एव—इति तेषामपि किमुच्यते। एवं घटशरीरप्राणसुखतदभावरूपं

आश्रय लेने वाले प्रकाश से जीवित प्रायः विमर्श के आश्रित होकर उन्मेष होने के कारण, जिसका विमर्श नहीं किया गया है ऐसी वस्तु न तो नील है और न तो पीत ही है; और न सत् है और न असत् है ऐसा क्यों है ? इस तरह से प्रश्न करने पर उत्तर क्या देंगे। इसलिए जो जितना भी अबाधित परामर्श होता है; वह वैसा उतना ही रहता है इससे देश-काल-आकार आदि विस्तृत स्वभाव वाले द्रव्य क्रिया के सम्बन्धादि यथार्थं सत् हैं—ऐसा आगे बताया जायेगा 'क्रिया सम्बन्ध सामान्य' ( २ अ० २ आ० १ श्लोक ) इस स्थल में।

इसलिए विस्तृत होता हुआ भी यह संसार विमर्श दशा में आरूढ़ होने पर जड और चेतन इन्हीं दो रूपों में रहता है। जडवर्ग भी विमर्श दशा में आ जाने पर स्वतंत्र नहीं रहते, विमृष्ट होना कोई उनका अपने स्वरूप में विश्राम लेने वाला धर्म नहीं है तब तो फिर जडभाव का अभाव प्रसंग आ जायेगा, मुझे नील भासता है। अथवा मेरे द्वारा नील का ज्ञान होता है। उन जडपदार्थों के चिन्मयरूप होने पर भी माया नामक ईश्वर की शक्ति से जडता को प्राप्त हुए 'जीवन्तम्' जीवित प्रमाता का आश्रय लेकर 'प्रतिष्ठा' उस प्रमाता के अभिमुख वर्तमानरूप से स्थित रहता है, इसलिए जडवर्ग कोई उससे अलग नहीं है जब कि ग्रन्थकार ने स्वयं इसका प्रतिपादन किया है। ''इस प्रकार ये सभी पदार्थ अपने में असत् कल्प [ नहीं रहने के बराबर ] प्रकाशक के ही अन्तर्भूत हैं।''

उसी आत्मा को सत्य कहना चाहिए जिसका रूप अन्य किसी से युक्त न होता हुआ स्वयं प्रकाशित होता हो। जड कोई ज्योतिरूप से संयुक्त नहीं रहता, इसी कारण जडपदार्थों के लिए ही जडवस्तुओं की शक्ति दिखाई जाती है किन्तु ऐसा घटित होना तो असंभाव्य ही दीखता है। जो लोग जडभावों से भिन्न जीते हुए कहे जाते हैं उनमें भी बहुत से शरीर-प्राण पुर्यष्टक [ शब्द-स्पर्श-रूप-रस-गंध-मन-बुद्धि और अहंकार को पुर्यष्टक कहते हैं ] से शून्य ही आकार होते हैं और उनके भी शरीरादि जडरूप ही तो हैं इस विषय में अधिक और क्या कहा जाय। इस प्रकार घट-शरीर-

सत् यल्लग्नं भाति तदेव जीवरूपभूतं सत्यम्; तस्य च आपाते यद्यपि बहुत्वं भाति तथापि तत् जडात्मकवेद्यशरीराद्युपाधेः। ततस्तत् अपारमार्थिकम् अन्योन्याश्रयात्, जीवा हि जडभेदात् भेदभागिनः जडाश्च जीवभेदात्, एतद्देहोऽयम् एतद्वेद्योऽयम्—इति भेदम् उपेयुः, नीलपीतादिभेदस्तु प्रमातृसंलग्नतया अभेदभूमिमेव परमारूढ इति किं तेन। तदयं जीवानामभेद एव संपन्न, इति जीवन् प्रमाता—इति जातं। जीवनं च जीवनकर्तृत्वं तच्च ज्ञानक्रियात्मकं, यो हि जानाति च करोति च स जीवति—इत्युच्यते। तदयं प्रमाता ज्ञानक्रियाशक्तियोगाद् ईश्वर—इति व्यवहर्तव्यः

प्राण-सुख और उन सबों का अभाव दुःखादिरूप सत् वस्तु को कुछ संसक्त मिला हुआ भासता है और वही जीवरूप में सत्य भी है; यद्यपि उसे देखने पर पहले-पहल बहुत से मालूम पड़ते हैं तो भी वह संबद्ध जडात्मक वेद्य शरीरादि की उपाधि से है। इसीलिए इसे पारमार्थिक रूप नहीं कहा जा सकता, क्योंकि परस्पर एक दूसरे के आश्रित होने के कारण, जीव जड से भिन्न भेद भागी होने से और जड जीव से भिन्न है, इसीलिए यह देह है एवं यह वेद्य है—ऐसे भेद-भाव को प्राप्त करना होगा, नील-पीतादि के भेद तो प्रमाता के संसक्त मिले हुए रहने के कारण अभेदात्मक भूमि में आरूढ़ रहता है उससे क्या प्रयोजन सिद्ध करना है। इसलिए जीवों का अभेद ही सिद्ध सम्पन्न हुआ, इसलिए जीवन प्रमाता कहा जाता है और जीवन जीव का कर्तापन है और इसी कारण उसे ज्ञान-क्रियात्मक कहा जाता है, जो जैसा जानता है उसे वैसा ही करता भी है और जीता है। इसलिए यह प्रमाता ज्ञान क्रिगात्मक शक्ति के योग से ईश्वर हो जाता है—ऐसा पुराण-

---

१. परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम्।
जडाद्विलक्षणो बोधो यतो न परिमीयते॥

परिच्छिन्न प्रकाशत्व होना जड का लक्षण है। ज्ञान तो जड से विलक्षण होता है इसलिए उसका परिच्छेद नहीं होता।

२. इच्छा-ज्ञान-क्रियापूर्वा यस्मात्सर्वाः प्रवृत्तयः।
सर्वेपि जन्तवस्तस्मादीश्वरा इति निश्चिताः॥

इति। ज्ञानक्रियाशक्तिलक्षणं च—

स्वप्रकाशे निजे धाम्नि भासयेद्भावविभ्रमान्।
भासना च क्रिया शक्तिरिति शास्त्रेषु कथ्यते॥
यया विचित्रतन्वादिकलना प्रविभज्यते।
भासनानभाते च कथं नामप्रकल्पनम्॥
तदस्यान्तःस्थितं भानं ज्ञानशक्तिरहं स्मृता।

'इच्छा एवं क्रिया ज्ञानपूर्वक ही हुआ करती है और तभी प्रवृत्तियाँ देखी जाती हैं। सभी प्राणीवर्ग ईश्वर का ही स्वरूप है यह दृढ़तापूर्वक मानना चाहिए।'

ज्ञान-क्रियाशक्ति का स्वरूप दिखाते हैं—'सब भावों को अपने बोध में जो भासित करते हैं वहाँ पर उसका भासना है और उसी क्रिया-शक्ति को शास्त्रों में भी कहा गया है जिससे विचित्र शरीरादि की स्थिति का विभाग होता है, यदि ऐसा उसका भासना नहीं भासित होता हो तो, कल्पना का होना असम्भव हो जायेगा; इसलिए उसका अन्तःकरण में रहकर भासित होना ज्ञान-शक्ति कहलाती है जिसका अहं विमर्श होता रहता है।'

**पुराणागमादिप्रसिद्धेश्वरवत्; तदप्रसिद्धावपि सर्वविषयज्ञानक्रियाशक्तिमत्त्वस्वभावमेव ऐश्वर्यं तन्मात्रानुबन्धित्वादेव सिद्धं; तदपि च कल्पितेश्वरे राजादौ तथा व्याप्तिग्रहणात्, यो यावति ज्ञाता कर्ता च स तावति ईश्वरो राजेव, अनीश्वरस्य ज्ञातृत्वकर्तृत्वे स्वभावविरुद्धे यतः, आत्मा च विश्वत्र ज्ञाता कर्ता च—इति सिद्धा प्रत्यभिज्ञा। ज्ञानक्रियाशक्ती एव स्वाभाविक्यौ अप्ररूढभेदोन्मेषे सदाशिवेश्वरौ, भेदस्य सामान्यतः प्ररोहे विद्याकले, विशेषतः प्ररोहे बुद्धिकर्मेन्द्रियगण—इति भविष्यति। जडा इति अजीवन्तः, अन्ये च जीवन्त—इत्यापाते तावत् भाति न तु संविदापाते भाति। जीवतामिति जङ्गमा एव अमी इत्थं निर्दिष्टाः ॥ ४ ॥**

**ननु ज्ञानक्रिये एव कथं सिद्धे यत ऐश्वर्यव्यवहारः प्रसाध्येत ?,—इति शङ्कां शमयितुमाह–**

**तत्र ज्ञानं स्वतःसिद्धं क्रिया कायाश्रिता सती।**
**परैरप्युपलक्ष्येत तयान्यज्ञानमूह्यते ॥ ५ ॥**

**अहं जानामि, मया ज्ञातं ज्ञास्यते च–इत्येवं प्रकाशाहंपरामर्शपरिनिष्ठितमेव इदं ज्ञानं नाम,**

आगमशास्त्रों में प्रसिद्ध ईश्वर के तुल्य व्यवहार में आता है; उसका ऐश्वर्य प्रसिद्ध न होने पर भी सब प्रकार से ज्ञान-क्रियाशक्ति का अपने में आ जाना ही ऐश्वर्य माना हुआ है; ये सभी बातें चिद्रूप में मिलने के कारण ही ऐश्वर्य वाले कहते हैं; और यह सिद्ध भी होता है एवं ये सारी को सारी बातें कल्पित ईश्वर-राजा आदि में भी मिलती हैं, जो जितने का ज्ञाता और कर्ता है वह उतने का स्वामी कहलाता है, जो ईश्वर नहीं है उसमें ज्ञातृत्व और कर्तृत्व का रहना अपने स्वभाव के विरुद्ध भी है, और आत्मा सर्वत्र ज्ञाता और कर्ता के रूप में रहता है इसलिए प्रत्यभिज्ञा सिद्ध होती है। ज्ञान और क्रिया की शक्ति स्वाभाविक है। जबतक भेद नहीं प्रस्फुटित होता है तबतक सदाशिव और ईश्वर भाव होता है, भेद भाव के सामान्यतः स्फुटित होने पर विद्या और कला का भाव आता है और अधिक विशेषरूप से बढ़ जाने पर बुद्धि और कर्मेन्द्रियगण का भाव होने लग जायेगा। जडपदार्थ निर्जीव है और चेतन तत्त्व तो सजीव जीवित होता है। दूसरे जीते हैं—ऐसा तो पहले-पहल ही देखने में आता है किन्तु ज्ञान के रहने पर नहीं भासता। 'जीवताम्' इससे चेतन जीवों का निर्देश किया हुआ है ॥ ४ ॥

अब शंका करते हैं कि ज्ञान और क्रिया कैसे सिद्ध होगी जिससे कि इन्हीं दोनों क्रियाओं का ऐश्वर्य-व्यवहार सिद्ध हो सके ? इस आशंका के समाधान में उत्तर देते हैं—

ज्ञान और क्रिया के बीच ज्ञान अपने आप सिद्ध है और क्रिया शरीर से सम्बन्ध रखती हुई दूसरे के द्वारा भी वह उपलक्षित होती है तथा क्रिया के द्वारा अन्यज्ञान को भी जान सकते हैं ॥ ५ ॥

मैं जानता हूँ, मेरे द्वारा जाना गया और मुझ से जाना जायेगा—इस प्रकार अहं परामर्श से परिनिष्ठित ही यह ज्ञान होता है, इससे अधिक वहाँ दूसरा क्या विचार किया जाय, उसका

**किं तत्र अन्यत् विचार्यते, तदप्रकाशे हि विश्वम् अन्धतमसं स्यात्, तदपि वा न स्यात्, बालोऽपि हि प्रकाशविश्रान्तिमेव संवेदयते। तदुक्तम् 'विज्ञातारमरे केन विजानीयात्।' ( बृ० २.५.१९ ) इति।**

**तन्निह्नवे हि कः प्रश्नः, किम् उत्तरं च स्यात्—इति। तत्र जानामि—इत्यन्तः संरम्भयोगोऽपि भाति, येन शुक्लादेर्गुणात् अत्यन्तजडात् जानामि—इति वपुः चित्स्वभावताम् अभ्येति, स च संरम्भो विमर्शः क्रियाशक्तिरुच्यते। यदुक्तम् अस्मत्परमेष्ठिश्रीसोमानन्दपादैः 'घटादिग्रहकालेऽपि घटं जानाति सा क्रिया।' इति। तेन आन्तरीयक्रियाशक्तिः ज्ञानवदेव स्वतः—**

प्रकाश न रहने पर तो यह सारा का सारा विश्व अन्धकारमय हो जायेगा, या विश्व ही नहीं रहेगा, क्योंकि बालक भी तो प्रकाश में ही विश्रान्ति का ज्ञान करता है। उसके विषय में कहा भी गया है—जानने वाले को किससे जाना जा सकता है' ( बृ० २.५.१९ )

उसके छिप जाने पर क्या प्रश्न और क्या उत्तर हो सकता है। 'मैं जानता हूँ' ऐसा अन्तःकरण में ज्ञान का प्रकाश भासता है, जबकि प्रकाश शुक्लादि गुणों से अत्यन्त जड रहता है, उससे भिन्न ही मैं जानता हूँ ऐसा वपु चित्स्वभाव को प्राप्त करता है उससे बढ़े हुए विमर्श को ही क्रिया-शक्ति कहा जाता है। जो कि हमारे दादा गुरु सोमानन्दपाद ने कहा है—'घटादि के ग्रहण काल में ही मैं घट को जानता हूँ इसी का नाम क्रिया है।' इसलिए अन्तःकरण में होने

---

१. **असिद्धौ च प्रकाशस्य कोऽहं किं त्वं तमोऽपि किम्।**
**न किञ्चिदपि वा किं स्यात्तूष्णीं स्यादपि वा कथम्॥**

**किञ्च**

**अयं घटोऽयं पट इत्येवं नानाप्रतीतिषु।**
**अर्कप्रभेव स्वज्ञानं स्वयमेव प्रकाशते॥**
**ज्ञान न चेत्स्वयंसिद्धं जगदन्धं ततो भवेत्। इति**

**प्रकाश की सिद्धि न होने पर ही व्यक्ति अपने आपको नहीं जान पाता है वास्तव में मैं कौन हूँ और तुम क्या हो तथा अज्ञान क्या है ? कुछ भी नहीं तो भी—कैसे चुपचाप रहेगा, क्या होगा या रहेगा भी कैसे—बैठा चुपचाप और भी इस विषय में सुनो—यह घट है और यह पट है इस प्रकार की विविध प्रतीतियों में सूर्य की प्रभा के समान अपना ज्ञान स्वयं प्रकाशित रहता है। यदि ज्ञान स्वयं सिद्ध नहीं होता तो यह सारा-का-सारा संसार अन्धा हो जायगा—**

२. **वेदान्त दर्शन का यह मत है कि जैसा वह जानता है, इसमें अन्तःकरण की वृत्ति विशेषरूप क्रिया ही "ज्ञा" धातु का वाच्यार्थ है क्योंकि 'ज्ञा' धातु अवबोध रूप में पढ़ी गयी है और चित्तत्व के प्रतिबिम्ब रूप आभास से युक्त होकर ही 'तिङ्' प्रत्यय का अर्थ होता है। परस्पर अध्यास को प्राप्त हुए आभास और बुद्धि के भेद का ग्रहण नहीं होता; ये दोनों आभास में मिल जाने के कारण मालूम नहीं पड़ते इस विषय में आचार्य ने कहा है—**

**आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्चधियः क्रिया।**
**उभयं चाविवेकेन जानातीत्युच्यते मृषा॥**
**बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते।**
**तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते॥**

सिद्धा स्वप्रकाशा, सैव तु स्वशक्त्या प्राणपुर्यष्टकक्रमेण शरीरमपि संचरमाणा स्पन्दनरूपा सती व्यापारव्याहारात्मिका मायापदेऽपि प्रमाणस्य प्रत्यक्षादेर्विषयः। सा च परशरीरादिसाहित्येन अवगता स्वं स्वभावं ज्ञानात्मकं गमयति, न च ज्ञानम् इदन्तया भाति, इदन्ता हि अज्ञानत्वं, न च अन्यत् अन्येन वपुषा भातं भातं भवेत्, तत् ज्ञानं भात्येव परं, भाति च यत् तदेव अहमित्यस्य वपुः,—इति परज्ञानमपि स्वात्मैव; परत्वं केवलम् उपाधेर्देहादेः, स चापि विचारितो यावत् न अन्य इति विश्वः प्रमातृवर्गः परमार्थत एकः प्रमाता, स एव च अस्ति। यदुक्तम्—

'…प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः।'

इति। ततश्च भगवान् सदाशिवो जानाति इत्यतः प्रभृति क्रिमिरपि जानाति—इत्यन्तम् एक एव प्रमाता—इति फलतः सर्वज्ञत्वं प्रमातुः[१]। एवं कर्तृत्वेऽपि वाच्यम्। यदुक्तम् अस्मत्पर-

वाली क्रिया-शक्ति ही ज्ञान के जैसो सिद्ध होती है और स्वयं अपने आप प्रकाशित भी रहती है, वही अपनी शक्ति द्वारा प्राण-पुर्यष्टकके क्रम से शरीर में रहती हुई स्पन्दनरूप होकर व्यापाररूप व्यवहार को सम्पादन कराती हुई मायामय पद में भी प्रत्यक्षादि प्रमाणों का विषय बनती है। और वह किसी अन्य के शरीरादि में ज्ञात होकर अपने ज्ञानात्मक स्वभावको जनाती है। ज्ञान 'इदन्तया' नहीं भासता है, क्योंकि इदन्ता तो अज्ञान का स्वरूप माना जाता है, और दूसरा कोई दूसरे के स्वरूप से भासित होने पर स्वयं भासित होना यह नहीं कहा जाता, वही अहंभाव का वपु है, इसलिए दूसरे का ज्ञान भी आत्मस्वरूप ही होता है; दूसरे का ज्ञान मात्र देहादि की उपाधि है, और उसके विषय में विचार करने पर वह दूसरा है ऐसा सिद्ध ही नहीं होगा, इसलिए विश्व के सारे प्रमातृगण परमार्थरूप से एक ही परमेश्वर के प्रमाता हैं। कहा भी है—इस विषय में '…प्रकाश एवास्ति स्वात्मनः परात्मभिः।' अपने आपका प्रकाश ही दूसरे को आत्मा से मिलकर रहता है।'

जो भगवान् सदाशिव जिस वस्तु-पदार्थ को जैसा भी सूक्ष्म-स्थूल रूप से जानता है उसे पहले से लेकर आखिरी तक कोट-पतंग भी जानते ही हैं, यहाँ तक एक ही प्रमाता है इससे प्रमाता की सर्वज्ञता सिद्ध हुई। उसी प्रकार कर्तृता में भी जान लेना चाहिए। जिसका प्रतिपादन परमेष्ठी

---

"तिङ्" प्रत्ययका वाच्यार्थ आभास है और "ज्ञा" धातुका अर्थ है बुद्धि की क्रिया। ये दोनों आपसमें मिले हुए रहनेके कारण और भेद ज्ञानके नहीं रहनेसे ही कहा जाता है कि यह ज्ञान असत्य है। बुद्धिके कर्तृत्वका अध्यास कहकर, यह "ज्ञाता जानता है" ऐसा बोला भी जाता है। इस प्रकार चैतन्यके ज्ञानका अध्यास होनेके कारण बुद्धिका ज्ञान कहा जाता है।

आभास, बुद्धि, और उसकी जो क्रियाएँ हैं इन तीनों का व्यवहार भी मिथ्या है। सकल बुद्धि का समष्टि रूप माया अवच्छिन्न चैतन्य ही ईश्वर है। उस-उस बुद्धिमें प्रतिबिम्बित होने वाले को जीव शब्द से कहा जाता है। उपाधि से रहित जो पूर्ण चैतन्य है वह ब्रह्म है। इस तरह चिति शक्ति के तीन भेद हो जाते हैं।

१. प्रश्न उठता है कि ईश्वर सर्वज्ञ क्यों नहीं है? यदि यह कहो कि–प्रमातृ-गत भेद के होने के कारण ऐसा मैं कहता हूँ, वह भी ठीक नहीं बैठता क्योंकि प्रमाताओं का भेद पारमार्थिक नहीं है।

स्वातन्त्र्य-शक्ति के द्वारा ही मात्र उसमें भेद दिखायी पड़ता है। वस्तुतः शिव आदि से लेकर

मेष्ठिभिः शिवदृष्टौ—

'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना।
सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना॥
नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः।'

इत्यादि। 'ऊह्यते' इत्यनेन ज्ञानस्य प्रमेयत्वं न निर्वहति–इति दर्शयति, अन्यथा हि अनुमीयते–इति ब्रूयात्। तदेवं येषां तार्किकप्रवादपांसुपातधूसरीभावो न वृत्तोऽस्मिन् संवेदनपथे, ते इयतैव आत्मानमीश्वरं विद्वांसो घटशरीरप्राणसुखतदभावान् तत्रैव निमज्जयन्त ईश्वरसमाविष्टा एव भवन्ति। ततोऽयम् उपोद्घातः।—उप इति आत्मनः समीपे टङ्कवत् ईश्वराभिज्ञानलक्षण उत्कर्षो हन्यते विश्राम्यते येन; एतावदेव च अस्य ग्रन्थस्य तात्पर्यम्,–इति। ततोऽपि अयम् उपोद्घातः।—उपांशु अविततं कृत्वा उदिति शास्त्रस्य ऊर्ध्वं एव हन्यते अपसार्यते प्रमेयविषयो व्यामोहो येन—इति। गत्यर्थत्वाद्वा हन्तेर्ज्ञानमर्थः, ज्ञायते प्रमेयं येन इति। केचित्तु गतिं

गुरु ने शिव दृष्टि शास्त्र में भी किया है—

'घट अपने आपको हमारे रूप से जानता है और मैं घट रूपमें जानता हूँ। मैं सदाशिव को सदाशिव के रूप में जानता हूँ और वह मेरे रूप से मुझे जानता है। इस प्रकार अनेक रूपों में अपने आपको जानते हुए स्वयं भगवान् शिव विराजमान है।'

'ऊह्यते' इस पद से ज्ञान की प्रमेयरूपता नहीं बनती, अर्थात् ज्ञान प्रमेयरूप नहीं होता, उसे तो प्रमाता का स्वरूप माना गया है—ऐसा 'ऊह्यते' क्रिया द्वारा दिखाया जाता है, नहीं तो अनुमान किया जाता है—ऐसा कहो। इसलिए इस ज्ञान मार्गमें जो लोग तार्किक प्रवाद की धूलि से दूषित नहीं हुए हैं वे लोग इतने ही ज्ञान से अपने आपको ईश्वर मानते हुए घट-शरीर-प्राण सुखादि को और उन सवोंके अभावों को उन्हीं में डुबाते हुए—ईश्वर परमात्मा में ही समाविष्ट हो जाते हैं। इस कारण से ही यह उपोद्घात शब्द सिद्ध होता है 'उप' शब्द का अर्थ यह होता है कि—आत्मा के समीप में टंकना के सदृश ईश्वर का अभिज्ञान-पहचान रूप उत्कर्ष जिससे पहुँचा दिया जाय उसी की उपोद्घात संज्ञा होती है, और इतना ही इस ग्रन्थ का तात्पर्य है, इसलिए भी यह उपोद्घात है। उपांशु=एकान्त में फैलने न देकर सभी शास्त्रों के ऊपर प्रमेय विषय को हटाते हुए जिससे आत्मा को उठाया जाय वही उपोद्घात है। गतिरूप अर्थ होने के कारण 'हन्' धातु

---

स्थावरपर्यन्त वह सर्वज्ञ शिव ही एक प्रमाता है। इसलिये रामावतार कालमें मैं नहीं था यह बात नहीं है अपितु मैं उस समय में भी था जो कि दूसरे प्रमाता में संवेदन ज्ञान से वक्ता ही उस काल का अनुभव करने वाला है।

१. चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते।
प्रसक्तानुप्रसक्तादि प्रस्तुताद्उपजायते॥

बुद्धि में प्रतिपाद्य विषय का संग्रह कर उसके अर्थ को अर्थान्तर से कहना ही उपोद्घात कहलाता है। प्रकृत प्रसंग के विचार-विमर्श को सिद्ध करने के लिए यथाक्रम वर्णन करते हुए रखना ही उपोद्घात है।

स्त्रियं गच्छति—इत्येतद्विषयामेव हन्त्यर्थमाहुः । एवं श्लोकचतुष्टयार्थभावनादार्ढ्यादिव लभ्यते परमशिवः—इति शिवम् ॥ ५ ॥

इति श्रीमदाचार्योत्पलदेवशिष्य—श्रीमदाचार्यलक्ष्मणगुप्तदत्तोपदेश—श्रीमदाचार्याभिनवगुप्तविरचितायां श्रीप्रत्यभिज्ञाविमर्शिन्यां ज्ञानाधिकारे उपोद्घाताख्यं प्रथममाह्निकम् ॥ १ ॥



## अथ प्रथमे ज्ञानाधिकारे पूर्वपक्षविवृत्याख्यं द्वितीयमाह्निकम्

पूर्वपक्षतया येन विश्वमाभास्य भेदतः ।
अभेदोत्तरपक्षान्तर्नीयते तं स्तुमः शिवम् ॥

इह यत् परमार्थरूपं तद् आशङ्क्यमानप्रतिपक्षप्रतिक्षेपेण निरूपयिष्यमाणं सुष्ठुतमां स्पष्टीकृतं भवति । यदाह भट्टनारायणः ।

'नमस्ते भवसंभ्रान्तभ्रान्तिमुद्भाव्य भिन्दते ।
ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा विवृण्वते ॥'

तत्रेह अनात्मानीश्वरवादिनां भ्रान्तिभेदनपूर्वकं परमार्थं विवरीष्यन् तदुद्भावनं तावत् एकादशभिः श्लोकैः करोति 'ननु स्वलक्षणाभासम्·····।' इत्यादिभिः '·····तेन कर्तापि कल्पितः ॥' इत्यन्तैः । तत्र श्लोकद्वयेन आत्मनो ध्रुवस्य दृश्यानुपलब्ध्या अभाव उक्तः प्रत्यक्षात्मवादिनः

का ज्ञान रूप भी अर्थ निकलता है, जिसके द्वारा प्रमेय विषय का ज्ञान होता हो । कुछ लोग तो स्त्री के समीप जाने में ही 'हन्' को गति-अर्थक मानते हैं ।

इस प्रकार चारों श्लोकों की अर्थ भावना को हृदय में दृढ कर देने से परम शिव की प्राप्ति होती है ॥ ५ ॥

प्रथम आह्निक समाप्त

जो पूर्वपक्ष के द्वारा विश्व को भेद पूर्वक आभासित कर उत्तरपक्ष को अद्वैत-अभेद के भीतर ले जाता है उस शिवकी हम स्तुति करते हैं ।

यहाँ पर जो परमार्थ रूप है उस पर आशंका करने वाले प्रतिपक्षी का उत्तर देकर निरूपण किया जाना अच्छा होता है । जैसा कि भट्टनारायण ने भी इस विषय में कहा है 'हे देव ? आपको नमस्कार हो ।' आप संसार की भ्रान्ति को बनाकर फिर उसका विनाश करते हैं तथा सुख-दुख के द्वन्दों से विनिर्मुक्त ज्ञानानन्द को विवरण करके प्राप्त करा देते हैं ।'

अनात्मा के विषय में अनीश्वर-वादियों की जो भ्रान्ति है उसे दूर करते हुए परमार्थ स्वरूप का विवरण करेंगे और उसका उत्थापन ग्यारह श्लोकोंसे करते हैं 'ननु स्वलक्षणाभासम्···।' इत्यादि से लेकर '···तेन कर्तापि कल्पितः ॥' दो श्लोक से नित्य आत्मा का दृश्य के अभाव की

प्रति । तत्र श्लोकत्रयेण स्मृत्यनुसंधानं संस्कारात् सिद्धम्—इति अन्यथासिद्धत्वात् आत्मानुमानाय न पर्याप्तम्—इति प्रोक्तम् अनुमेयात्मवादिनः प्रति । तत्र श्लोकेन ज्ञानादिगुणैर्गुणिनि प्रतिपत्तिः—इति अनुमानं निरस्तम् । एवम् आत्मानं निराकृत्य, ततो ज्ञानक्रियाशक्तिसंबन्धरूपमैश्वर्यं निराकर्तुं ज्ञानस्य स्वरूपमेव व्यतिरिक्तं बाह्यन्तरमते, सांख्यमते च अयुज्यमानम्—इति निरूपितं श्लोकद्वयेन । तत एकेन क्रिया नाम न काचित् क्वचिदपि अस्ति—इति कथितं । तत्र साधकं प्रतिक्षिप्य बाधकं च उपन्यस्यति । ततः संबन्धस्य श्लोकेन नास्तित्वं प्रतिपादितं प्रमाणाभावं वदता । श्लोकेनैव तत्र बाधकं प्रमाणमुक्त्वा, न आत्मा स्थिरो, नापि ज्ञातृत्वकर्तृत्वलक्षणम् अस्य ऐश्वर्यम्—इति स्वपक्ष उपसंहृतः—इति पूर्वपक्षस्य पिण्डार्थः ।

**अथ ग्रन्थो व्याख्यायते**

**ननु स्वलक्षणाभासं ज्ञानमेकं परं पुनः ।**
**साभिलापं विकल्पाख्यं बहुधा नापि तद्द्वयम् ॥ १ ॥**
**नित्यस्य कस्यचिद्द्रष्टुस्तस्यात्रानवभासतः ।**
**अहंप्रतीतिरप्येषा शरीराद्यवसायिनी ॥ २ ॥**

उपलब्धि से अभाव कहा गया है, मानसप्रत्यक्षात्म-अद्वैत-शैव-मतावलम्बियों के लिए । तीन श्लोकोंसे संस्कार के द्वारा स्मृति का अनुसन्धान सिद्ध किया जायेगा—अन्यथा सिद्ध होने के कारण आत्मा के विषय में अनुमान करना पर्याप्त नहीं होगा—यह अनुमेय आत्मवादी नैयायिकों के लिए कहा हुआ है । अनन्तर एक श्लोक से ज्ञानादि गुणों के द्वारा गुणवान् आत्मा का ज्ञान होता है तार्किक मत से । इस प्रकार से अनुमान को निरस्त कर दिया गया । आत्मा का निरास करके ज्ञान, क्रिया-शक्ति के सम्बन्ध रूप ऐश्वर्य को निरस्त करने के लिए ज्ञान का स्वरूप भिन्न होता है यह दूसरे वादियों के सिद्धान्त की बात है । और इसके पश्चात् दो श्लोक से यह अयुक्त है सांख्यमत में इसका निरूपण किया जायेगा । इसके बाद क्रिया नाम की कोई चीज हो नहीं है जो कि कहीं पर किसी को देखने में आयो हो—ऐसा बताया है । साधक प्रमाण का खण्डन करके बाधक प्रमाण का उपपादन करेंगे । इसके बाद एक श्लोक से ज्ञान-क्रिया के सम्बन्ध का अभाव प्रमाणाभाव के कारण से होता है यह बताया गया है । और एक श्लोक से बाधक प्रमाण कहकर, आत्मा स्थिर नहीं है और न तो उसका ( ज्ञातृत्व-कर्तृत्व ) जानना और करना घटित होता है और इसका ऐश्वर्य है, यह अपने पक्ष का उपसंहार किया हुआ है और यही पूर्वपक्ष का निचोड़ है ।

अब ग्रन्थकी व्याख्या करते हैं—अपने आप ही भासित होने वाला स्वयंप्रकाश ज्ञान हो एक श्रेष्ठ पदार्थ है विकल्प रूप अपना ही अभिलाप है बहुतसे या दो प्रकार के भो विकल्प नहीं होते हैं ॥ १ ॥

क्योंकि नित्य द्रष्टा यहाँ कोई भासित नहीं होता है । अहंप्रतीति यह जो होती है वह शरीर को ही विषय करती है ॥ २ ॥

'ननु' इति आक्षेपे; इह आत्मा संवित्स्वभावः स्थिरः—इति तावदयुक्तम्, स्थिरस्य स्वप्रकाशस्य अप्रकाशनात्। तथाहि—घटप्रकाशो, घटविकल्पो, घटप्रत्यभिज्ञा, घटस्मृतिः, घटोत्प्रेक्षा—इत्यादिरूपेण ज्ञानान्येव प्रकाशन्ते, भिन्नकालानि भिन्नविषयाणि भिन्नाकाराणि च।

तत्र नीलप्रकाशः 'स्वलक्षणाभासं ज्ञानं'। 'स्वम्' अन्याननुयायि स्वरूपसंकोचभागि 'लक्षणं' देशकालाकाररूपं यस्य तस्य 'आभासः' प्रकाशनम् अन्तर्मुखं यस्मिन् बहिर्मुखीनस्वरूपधारिणि ज्ञाने तत् अविकल्पकं, विषयभेदेऽपि एकजातीयं स्वरूपे, तद्वैचित्र्ये कारणाभावात्। विकल्पे हि वैचित्र्यकारणम् अभिलापः, स च अत्र नास्ति; नहि अभिलापो नीलस्य धर्मः, नच चक्षुर्ग्राह्यः, ततोऽसौ प्राच्यः स्मर्तव्यः, अप्रबुद्धे च संस्कारे न स्मृतिः, तत्प्रबोधश्च वस्तुदर्शनोत्थितः—इति वस्तुदर्शनसमयेऽभिलापस्मृतिर्नास्ति। ततः 'परं' विकल्पकं ज्ञानं, सर्वस्य विकल्पस्य साक्षात्, पारम्पर्येण वा निर्विकल्पकमूलत्वात्। 'परम्' इति च अन्यरूपं सामान्यलक्षणं तस्य विषयः, स्वलक्षणेऽतिसंकोचिनि विततविकल्पसाध्यस्य वृद्धव्यावहारिकस्य, औपदेशिकस्य वा संकेतस्य कर्तुम् अशक्यत्वात्, कृतस्यापि वैयर्थ्यात्, तेन हि अननुयायिना न पुनर्व्यवहारः। तच्च बहुभेदं,

'ननु' शब्द का प्रयोग कहे हुए सिद्धान्त का निराकरण करने के लिए किया गया है। ज्ञान, क्रिया-शक्ति से युक्त संवित् ज्ञान का स्वरूप है। 'ननु' आक्षेप अर्थ में भी है; आत्मा संविद्रूप स्वभाव वाला एवं स्थिर नित्य है यह कहना कोई युक्तियुक्त नहीं है, स्थिर स्वभाव वाला जो स्वप्रकाश है उसका प्रकाश न होने के कारण। देखो—घट का प्रकाश हुआ, घट का विकल्प हुआ, घट की प्रत्यभिज्ञा हुई और घट की स्मृति हुई एवं घट की उत्प्रेक्षा हुई—इत्यादि जो कुछ है वह सब ज्ञानरूप से भासित होता है, जो कि भिन्न कालवाले, भिन्न विषयवाले और भिन्न आकार-प्रकारवाले हैं। [ क्योंकि ज्ञानों की क्षणिकता होने से ] नील प्रकाश निर्विकल्परूप है 'स्वलक्षणाभासं ज्ञानं' वह अपने स्वरूप का आभासरूप ज्ञान है। दूसरों का अनुकरण नहीं करता है अपने स्वरूप का संकोच करनेवाला होता है 'लक्षणं' देश, काल और आकाररूप लक्षण है जिसका। उसी का आभास-प्रकाश अन्तर्मुख रहता है, बहिर्मुख स्वरूपधारी ज्ञान में अविकल्प स्थिर रहता है, विषय के भेद होने पर भी अपने स्वरूप में एक जातीय ही रहता है, उसकी विचित्रता में कारण का अभाव होने से। क्योंकि विकल्प में विचित्रता का कारण अभिलाप होता है और वह इसमें नहीं है; अभिलाप नीलका धर्म नहीं है और चक्षु इन्द्रिय से ग्रहण भी नहीं होता, इसलिए वह समयरूप से स्मरणीय है और जबतक संस्कार उद्‌बुद्ध नहीं होता तबतक स्मृति नहीं होती है, उसका ज्ञान वस्तु के दर्शन से ही होता है—इस प्रकार वस्तु-पदार्थ के दर्शन के समय में अभिलाप की स्मृति नहीं होती है। इसलिए 'परं विकल्पं ज्ञानं' सब से अच्छा ज्ञान विकल्प का होता है; क्योंकि वह सभी विकल्पों का साक्षात् या परम्परा रूप से निर्विकल्पमूलक रहता है। 'परं' इसका तात्पर्य यह है कि अन्यरूप सामान्यलक्षण उसका विषय है, अपने लक्षण में जो अति संकोचशील है जिसका विकल्प साध्य वृद्धजनों से व्यवहार करने योग्य या औपदेशिक संकोच करने के लिए अशक्य होता है, संकोच करना भी उसका निरर्थक है, क्योंकि वह किसी का अनुयायी नहीं होता और उसका फिर से व्यवहार भी नहीं हो सकता एवं उसमें अनेक भेद भी मिलेंगे; क्योंकि सङ्कल्पात्मक अभिलाप होने से वह कथन रूप होने के कारण साथ में हो रहता है

यतस्तत् अभिलापेन[1] संजल्पात्मना शब्दनरूपेण सह वर्तते। शब्दनं च इदम्—इति, तत्—इति, तदिदम्—इति, भवेदिदम्—इति, इदं वा इदम्—इत्यादि 'बहुधा' भिद्यते। तच्च न विषयपक्षे वर्तते, अपि तु तस्य विकल्पस्य स्वरूपमेव विचित्रीकुर्वत् प्रतिभाति—इति विकल्पो बहुभेदः।

एवम् अनुभवविकल्पपरम्परा तावत् स्वप्रकाशत्वेन भाति। स्यादेतत्, यल्लग्नासौ परम्परा सोऽपि आभाति—इति; तन्न, यतो द्वयमपि एतद् अविकल्पेतररूपं न अन्यस्य 'कस्यचित्' एतदतिरिक्तस्य 'द्रष्टुः' अनुभवितुः सम्बन्धि, दृश्यस्य तु भवतु बाह्यार्थवादे। अत्र हेतुः—यतः 'तस्य' द्रष्टुः, अत एव संवित्स्वभावतोपगमात् स्वप्रकाशतायोग्यत्वात् आपन्नोपलब्धिलक्षणप्राप्तेः; 'अत्र' एतद्बोधद्वयमध्ये नास्ति अवभासः। ननु अस्त्येव अवभासः—इति असिद्धा दृश्यानुपलब्धिः।

तथाहि–अहं वेद्मि, निश्चिनोमि, स्मरामि इदम्–इति विदादिप्रकृत्यर्थरूपात् ज्ञानस्मृत्यादेः, इदम्—इति च कर्मरूपात् विषयात् अतिरिक्तमेव अहम्—इति अनुयायिनि प्रकाशे अनुयायि रूपं भाति। क एवमाह भाति—इति ?। भानं हि अविकल्पकम्, अहम्—इति शब्दानुविद्धो

और इसका कथन भी यही होता है, वही यह है. यह ऐसा होगा, इस तरह इसके बहुत से 'बहुधा' भेद हो जाते हैं और वह प्रतिद्वन्द्वी के पक्ष में नहीं है अपितु, उस विकल्प के स्वरूप को ही चित्र-विचित्र करता हुआ स्वरूप से भासित होता है—इस प्रकार विकल्प भी बहुत भेदवाला होता है। एवं अनुभव-विकल्पों की धारा पहले स्वप्रकाशरूप से भासती है। यह हो सकता है, इसकी अपेक्षा जो उसमें मिला रहता है वह भी भासित होता है; क्योंकि ये दोनों अविकल्प और विकल्प से भिन्न रूप में किसी 'द्रष्टुः' द्रष्टा का अथवा तो अनुभव करनेवाले का सम्बन्धी नहीं हो सकता, किन्तु दृश्य का तो बाह्यार्थवादी के मत में हो सकता है। इसमें हेतु दिखाते हैं—क्योंकि 'तस्य' उस द्रष्टा का हो सकता है, इसलिए होता है कि संविद्रूप ज्ञान स्वभाव की प्राप्ति कर लेने के कारण अपने प्रकाश की योग्यता होने से, उपलब्धि की प्राप्ति होने से; 'अत्र' इन दोनों के ज्ञान के बीच में आभास नहीं है। 'ननु' कहकर शंका उठाते हैं कि अवभास रहता ही है दृश्य को अनुपलब्धि [ अप्राप्ति ] असिद्ध हो गयी जो सिद्ध है तब फिर दृश्य की उपलब्धि कैसे होगी। उसी प्रकार से होती है कि मैं जानता हूँ, मैं निश्चय करता हूँ और इसको मैं स्मरण करता हूँ—इत्यादि जो विदादि धातुओं के प्रकृत्यर्थ ज्ञान, स्मृति वगैरह है उन कर्मरूप विषयों से 'अहं' अतिरिक्त-भिन्न वस्तु है—इस प्रकार इच्छा करनेवाले के प्रकाश में अनुयायी रूप से भासता है। कौन कहता है कि भासता है ? क्योंकि भान तो अविकल्प ही होता है अहं जो है वह तो अहं शब्द से अनुविद्ध-

---

१. अभिलाप विषय की परवशता का त्याग करा कर बोध स्वातन्त्र्य रूप होने के कारण विषय को तादात्म्यरूप में ले आता है, व्यक्तरूप से प्रमाता का साक्षात्कार करने तक परामर्श किया जाना ही अभिलाप है, आन्तर शब्द वाला संजल्प कहलाता है। श्री भर्तृहरि ने भी कहा है—

सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते॥

विकल्पप्रत्ययः। ननु तथापि किम् अनेन विकल्प्यते, शरीरसन्तानो वा कृशोऽहम्—इत्यादिप्रत्ययात्, ज्ञानसन्तानो वा सुख्यहम्—इत्यादिप्रतीतेः। मत्वर्थीयश्च सन्तानमेव स्पृशति नातिरिक्तम्। तदेतदुक्तम्—'अहंप्रतीतिरपि' शरीरम्, आदिग्रहणात् ज्ञानम् अवस्यति, सन्तानरूपतया विकल्पयति अवश्यं; सदृशापरापरभावभेदग्रहणसामर्थ्यवासनाविष्टत्वात्—इति। 'एषा' इति न अस्माभिर्निह्नुता, 'साभिलापं विकल्पाख्यम्' इत्यनेन संगृहीतत्वात्। एतदुक्तं भवति—अहंप्रतीतिरेव तावत् न आत्मा, तस्या अपि विकल्परूपत्वात् अस्थैर्याच्च। एतत्प्रतीतिप्रत्ययेयोऽपि नास्ति अन्यः शरीरादेः, भवन्नपि वा वेद्यपक्षपतितः स्यात्—इति। तथापि संवित्संवेद्यव्यति-

अनुगत होकर विकल्प का बोध कराता है। प्रश्न करते हैं कि इससे तुम क्या विकल्प करते हो, 'मैं कृश हूँ' इत्यादि प्रत्यय से शरीर-सन्तान का विकल्प करते हो ? या 'मैं सुखी हूँ' इत्यादि ज्ञान सन्तान का विकल्प करते हो ? क्योंकि मत्वथीर्यं जो प्रत्यय है वह सन्तान को ही स्पर्श करता है किसी अन्य को नहीं। इसीलिए यही कहा जाता है कि अहं-प्रतीति भी शरीर को ही स्पर्श करती है आदि ग्रहण से ज्ञान को भी लिया जाता है, सन्तान रूप से अवश्य विकल्पित किया जा सकता है, सदृश अन्य-अन्य भाव-भेद के ग्रहण-सामर्थ्य की वासना से आविष्ट होने के कारण। 'एष' शब्द से साभिलाप जो विकल्प है हमने उसको नहीं छिपाया है किन्तु उसका संग्रह कर दिया है। इसका यह निचोड़ निकलता है कि अहं शब्द से जो प्रतीति होती है वह आत्मा को विषय नहीं करती; क्योंकि वह भी तो विकल्परूप है और अस्थिर है। शरीरादि से भिन्न इस प्रतीति का दूसरा कोई विषय नहीं होता यदि हो तो भी वेद्य का ही पक्षपात करनेवाला होगा। फिर भी

१. अनादि अनवच्छिन्न धारा से प्रवृत्त हुए ज्ञानों का कार्य-कारण-भावरूप प्रवाह ही सन्तान है। 'अहं' प्रतीति से मैं जानता हूँ, मैं देखता हूँ—इस प्रकार अनुभव से शरीर-सन्तान अथवा ज्ञान-सन्तान का निश्चय करता है, इससे अतिरिक्त कोई ज्ञाता अथवा द्रष्टा का ज्ञापन नहीं हो रहा है—ऐसा सौगतों का कहना है।

२. आत्मानमात्मनात्मैव लिङ्गादनुमिनोति हि।
तत्र नूनमुपेतव्या कर्तृता कर्मतास्य च॥
तत्रानुमानज्ञानस्य यथात्मा याति कर्मताम्।
तथाऽहं-प्रत्ययस्यैव प्रत्यक्षस्यापि गच्छतु॥
देहादिव्यतिरिक्तश्च यथा लिङ्गेन गम्यते।
तथाऽहं प्रत्ययेनापि गम्यतां तद्विलक्षणः॥

अपने ही लिङ्ग से आत्मा का अनुमान होता है। इसलिए उसमें निश्चय ही उसकी कर्तृता और कर्मता को मानना पड़ेगा। जैसा कि आत्मा अनुमान ज्ञान का कर्म होता है उसी प्रकार ही वह प्रत्यक्ष अहंप्रत्यय की कर्मता को प्राप्त करे। देहादि से भिन्न आत्मा जिस प्रकार अपने लिङ्ग से जाना जाता है उसी प्रकार अहं प्रत्यय से भी उसको विलक्षण होने के कारण जाना जाय।

अब प्रश्न करते हैं कि आत्मा का जो रूप है क्या वह प्रत्यय साक्षात् किया जाता है, यदि सुखादि आत्मा का रूप है तो उसका मानस प्रत्यक्ष होगा ?

शंका होती है कि आनन्दादि स्वभाव प्रसिद्ध ही रूप सुखादि का है, तब तो उसको आधारता से अपनी आत्मा का भी रूप जानना चाहिए—

रिक्तस्य आत्मनो न सिद्धिः—इत्येतत् अपिशब्देन द्योतितम्। एवं नास्ति आत्मा संवित्संवेद्यव्यतिरिक्तो दृश्यस्य अनुपलब्धेः—इति ॥ २ ॥

अत्र आत्मवाद्यनुमानमुत्थापयितुमाह—

**अथानुभवविध्वंसे स्मृतिस्तदनुरोधिनी ।**
**कथं भवेन्न नित्यः स्यादात्मा यद्यनुभावकः ॥ ३ ॥**

इह स्मृतिकाले सुस्मूर्षितोऽर्थो भवतु, ध्वंसतां वा—इति किम् अनेन, अनुभवस्तावत् ध्वस्तः—इत्यत्र सर्वस्य अविवादः, तमेव च अनुरुन्धाना स्मृतिर्जायते। तथाहि—स्मृतौ न अर्थस्य प्रकाशः, न अध्यवसायः, नापि अनुभवस्य, अर्थस्य च अङ्गुलिद्वयवत्, नापि अनुभवविशिष्टस्य

ज्ञान-संवित् संवेद्य से भिन्न आत्मा की सिद्धि नहीं हो सकेगी। यह 'अपि' शब्द से द्योतित होता है। [ संवित् ज्ञान-सन्तान और संवेद्य शरीर-सन्तान है, उन दोनों से भिन्न है। ] इसलिए मानना पड़ेगा कि दृश्य की अनुपब्धि के कारण संवित् संवेद्य से भिन्न आत्मा नहीं है ॥ २ ॥

आत्मवादी अनुमान का उत्थापन करने के लिए कहते हैं—

अनुभव के ध्वंस हो जाने पर भी स्मृति उस अनुभव को स्थिर रखती है। यदि आत्मा अनुभव करने वाला नित्य न होता तो स्मृति किसी भी प्रकार से नहीं हो सकती है ॥ ३ ॥

स्मृतिकाल में सूक्ष्मरूप से अर्थ स्मृत हो जाय अथवा ध्वस्त हो जाय—इससे क्या प्रयोजन, अनुभव तो विनष्ट हो जाता है इस विषय में किसी को भी विवाद नहीं है, और उसी अनुभव को स्थिर करती हुई स्मृति पैदा होती है। जैसा कि—स्मृति में अर्थ का प्रकाश नहीं होता है, और न निश्चय रूप से अध्यवसाय ही होता है, एवं अनुभव भी नहीं होता है, और अर्थ का दो अङ्गुली के जैसा समानरूप से प्रकाश होता है, न तो अनुभव विशिष्ट अर्थ का

---

सुखादि चेत्यमानं हि स्वतंत्रं नानुभूयते ।
मतुबर्थानुवेधस्तु सिद्धं ग्रहणमात्मनः ॥
इदं सुखमिदं ज्ञानं दृश्यते न घटादिवत् ।
अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका ॥

अपि च

ज्ञातृज्ञानविशिष्टार्थग्रहणं किल भाष्यकृत् ।
स्वयं प्रादीदृशत्तच्च किं वा युक्तमुपेक्षितुम् ॥
विशेष्यबुद्धिमिच्छन्ति नागृहीतविशेषणाम् ।

अनुभव में आया हुआ सुखादि भी स्वतन्त्र रूप से अनुभूत नहीं होता है 'मतुप्' को लगा देने पर तो आत्मा का ग्रहण होना सम्भव है। यह सुख है, यह ज्ञान है ऐसा घटादि के समान नहीं दिखता है किन्तु मैं सुखी हूँ, मैं ज्ञाता हूँ, यह प्रकाशित होता है।

इस वात को भाष्यकार ने भी बताया है—ज्ञाता के ज्ञान से विशिष्ट ही अर्थ ग्रहण होता है। स्वयं उन्होंने इसको बता दिया है इसलिए यह उपेक्षा करने योग्य नहीं है। अत एव विशेष बुद्धि को ही चाहते हैं विशेषण को नहीं ग्रहण करना चाहिए।

**अर्थस्य दण्डिवत्, सर्वत्र अयम्—इति प्रत्ययप्रसङ्गात्; किन्तु अनुभवप्रकाश एव स्मृतौ प्रधानम्, अनुभवस्य तु अर्थप्रकाशात्मकत्वात् अनुभवप्रकाशनान्तरीयकोऽर्थावभासः—इति। सर्वथा यदि अनुभवो ध्वस्तः, तदा तत्प्रकाशरूपा कथं स्मृतिस्तद्द्वारेण अर्थविषया स्यात्, तया च सर्वो व्यवहारः क्रियमाणो दृष्टः—इत्यसौ स्वरूपेण अनपह्नवनीया, सति अनुभवस्य नाशे, किञ्चित् अविनष्टम् आवेदयति। तदेव च अनुभवकर्तृ अनुभवितृरूपम्, आत्मा अनुभावको नित्यः—इति इयदेव च आत्मसिद्धेर्जीवितम्। तत्तु न अधिकम् इहैव उन्मीलितम् आचार्येण, वक्तव्यशेषविवक्षया पूर्वपक्षो मा तावत् समापत्—इत्याशयेन 'कथंभवेत्' इति। अर्थस्तावत् तस्याम् अकिञ्चित्करः।**

**अनुभवश्च ध्वस्तः—इति न केनचित्प्रकारेण स्मृतिः स्यात्, तदभावे च संकेतशब्दस्मृत्यायत्ता अपि अस्तङ्गताः सर्वे विकल्पाः, निर्विकल्पं च अन्धमूकबधिरप्रायम्—इति हन्त निराक्रन्दम् अवसीदेत् विश्वम्—इति॥ ३॥**

**इह कार्यव्यतिरेकेण तादृक् कल्पनीयं यत् कार्यसिद्धये पर्याप्नोति, न चैवम् आत्मा, अर्थो हि तावत् स्मर्यते, स च अनुभवप्रकाशमुखेन, अनुभवश्च ध्वस्तः–इत्युक्तं; यदि आत्मा कश्चिदस्ति, किं तेन। एतदपि हि वक्तव्यम्—आकाशमपि अस्ति—इति। अथ उच्यते—न केवलेन आत्मना**

दण्डीपुरुष की तरह प्रकाश होता है, किन्तु स्मृति में अनुभव प्रकाश ही प्रधान है, अनुभव तो अर्थप्रकाशात्मक है अनुभव प्रकाश के बिना अर्थ का अवभास नहीं होता, यदि सब प्रकार से अनुभव का ध्वंस हो जायेगा, तब तो अनुभवसे प्रकाशित होनेवाली स्मृति अर्थविषयक कैसे सम्भव हो सकेगी, और उस स्मृति से ही समस्त क्रियमाण व्यवहार होता हुआ देखा जाता है, इसलिए इसको स्वरूप से हटा नहीं सकते हो, अनुभव के नाश हो जाने पर कुछ अविनष्ट संस्कार का ज्ञापन होता है, इसीलिए उसे अनुभवकर्ता और अनुभविता कहा जायेगा, आत्मा अनुभव करने वाला नित्य है और इतना ही आत्मसिद्धि का जीवन है। इससे अधिक नहीं है, इसी में आचार्य ने दिखाया है, अभी करने के लिए कुछ शेष रह गया है इस विवक्षा से पूर्वपक्ष प्रायः समाप्त न हो जाय; इस अभिप्राय से 'कथं भवेत्' यह पद दिया गया है। अर्थ उस स्मृति में कुछ भी नहीं है, विषय की सत्ता स्मृति में अनपेक्षणीय है, और अनुभव तो विनष्ट हो गया, तब फिर स्मृति कैसे सम्भव हो सकेगी, अर्थात् स्मृतिका किसी भी प्रकारसे होना सम्भव नहीं दीखता, और स्मृति का अभाव हो जाने पर संकेत शब्द स्मृति के आधीन होता हुआ भी सभी विकल्प नष्ट ही हो जाते हैं, और निर्विकल्प तो फिर अन्धे एवं बहरे के जैसा ही प्रायः हो जाता है; बड़े दुःख की बात है। अब इसके लिए चिल्लाना निरर्थक ही है यह विश्व दुःखमय हो जायेगा॥ ३॥

कार्य से भिन्न ऐसा जो कार्यानुकूल उस कार्यको पैदा करनेवाले कारण की कल्पना करनी चाहिए जो कि सिद्धि के लिए पर्याप्त हो, और जो आत्मा नहीं है, अर्थ विषय का ही स्मरण किया जाता है और वह अर्थप्रकाश अनुभवप्रकाश के माध्यम से होना चाहिए, किन्तु अनुभवप्रकाश विनष्ट हो जाता है, इस विषय में जो कहना था सो कह दिया गया है; यदि आत्मा नाम की कोई वस्तु है तो फिर उससे किसी का कुछ भी प्रयोजन सिद्ध होता नहीं

एतत् सिद्ध्यति, अपितु अनुभवसंस्कारोऽपि अत्र उपयोगी—इति, तर्हि स एवास्तु, किम् आत्मना ?—तत् एतत् दर्शयति—

**सत्याप्यात्मनि दृङ्नाशात्तद्द्वारा दृष्टवस्तुषु ।**
**स्मृतिः केन**

'दृष्टेषु' अनुभूतेषु 'वस्तुषु' या 'स्मृतिः' तस्याम् अनुभवो दृगात्मा 'द्वारम्' अर्थांशस्पर्शे, स च 'सत्यपि आत्मनि' नष्टोऽनुभवः तस्य हि अनाशे इदम्—इत्येष एव अत्रुटितः प्रकाशः—इति का स्मृतिः, तदनुभविता किं स्मृतेः कुर्यात्—इति ॥

**अथ यत्रैवानुभवस्तत्पदैव सा ॥ ४ ॥**

'यत्रैव' विषये 'अनुभवो' वृत्तः 'तदेव' तस्या स्मृतेः 'पदं' स्मर्यमाणम् । तत्पदा—इति बहुव्रीहिः, 'सा' इति स्मृतिः ॥ ४ ॥

ननु ज्ञानान्तरस्य विषयेण कथं तस्याः विषयित्वाभिमानः—इत्याशङ्क्याह—

**यतो हि पूर्वानुभवसंस्कारात्स्मृतिसंभवः ।**

दिखाई देता; यह भी कहना चाहिए कि आकाश भी कोई वस्तु है ? ऐसी स्थिति में यही कहा जाता है कि—आत्मा से कुछ भी सिद्ध होनेवाला नहीं है, अपितु अनुभव संस्कार ही इसमें उपयोगी होगा, तब तो, अनुभव संस्कार ही स्मृति में उपयोगी रहे, आत्मा से क्या सिद्ध होने वाला होगा ? उसे दिखाया जाता है—

आत्मा के ही रहने से दृष्टि के नष्ट हो जाने पर भी दृष्ट वस्तु का स्मरण होता है, यदि आत्मा को नहीं मानते हो तो फिर कौन स्मरण करेगा ·····॥

'दृष्टेषु' दृष्ट—अनुभूत वस्तुओं में जो स्मृति होती है उस स्मृति में अनुभव ज्ञानात्मा अर्थविषयक अंश का द्वार है, और वह 'सत्यपि आत्मनि' आत्मा के रहने पर भी अनुभव नष्ट हो जाता है, उस अनुभव के नित्य रहने पर यह घट-पद है—ऐसा लगातार प्रकाश होता रहेगा। अतः स्मृति की क्या जरूरत रह जायेगी ? हम अनुभव को ही नित्य मान लेंगे और इसीसे हमारा कार्य सम्पन्न हो जायेगा। स्मृति में अनुभवकर्ता को मान कर क्या करेंगे।

जिस अर्थ विषय में अनुभव होता है उस विषय के अर्थ की ही स्मृति होती है ॥ ४ ॥

'यत्रैव' जिस विषय में अनुभव होता है। जैसे घट-पद का अनुभव हुआ तो घट-पद का स्मरण भी घट-पद से ही होगा। और उसी विषय का स्मरण होता है, जो पद अनुभव का विषय है वही पद स्मृति का भी विषय होता है, 'तत्पदं यस्यां स्मृतौ सा तत्पदा स्मृतिः', कारिका में 'सा' यह स्मृतिपद से लिया हुआ है ॥ ४ ॥

अब शङ्का करते हैं कि जो अनुभव का विषय है वह स्मृति का विषय कैसे बनेगा, क्योंकि अनुभव तो नष्ट हो गया फिर उसका विषय स्मृति नहीं बनेगी, इस आशङ्का के उत्तर में कहते हैं—

क्योंकि पूर्व के अनुभव-संस्कार से ही स्मृति सम्भव है।

अनुभवेन हि संस्कारो जन्यते स्वोचितः, संस्कारश्च प्राक्तनरूपां स्थितिं स्थापयति, आकृष्ट-शाखादेश्चिरसंवर्तितस्य विवर्त्यमानस्य भूर्जदेः। तेन अत्रापि संस्कारः तां स्मृतिं पूर्वानुभवानु-कारिणीं करोति—इति तद्विषय एव स्मृतेर्विषयः॥

**यद्येवमन्तर्गडुना कोऽर्थः स्यात्स्थायिनात्मना ॥ ५ ॥**

एवं तर्हि 'अन्तर्गडुः' यथा आयासाय परं, तद्वत् आत्मा स्थिरः कल्पनायासमात्रफलः—इति किं तेन, सर्वं हि संस्कारेण जगद्व्यवहारकुटुम्बकं कृतकरावलम्बम्—इति ॥ ५ ॥

ननु तस्यैव संस्कारस्य आश्रयो वक्तव्यः, स हि गुणत्वाद् आश्रयमपेक्षते, य आश्रयः स आत्मा स्यात्—इत्याशङ्क्याह—

**ततो भिन्नेषु धर्मेषु तत्स्वरूपाविशेषतः।**
**संस्कारात्स्मृतिसिद्धौ स्यात्स्मर्ता द्रष्टेव कल्पितः[1] ॥ ६ ॥**

अनुभव से संस्कार उत्पन्न होता है, यही उचित भी है। जैसा हमारा देखा रहेगा वैसा ही संस्कार होता है और वही संस्कार पूर्वकालीन स्थिति को स्थिर रखता है। किसी शाखा को खींचकर बड़ी देर तक रोके रखें तो भी वह बाद में जब छोड़ देते हैं तब पुनः अपने स्थान पर चली जाती है। इसलिए यहाँ पर भी संस्कार उस स्मृति को पूर्व अनुभव के अनुसार ही कराता है, अनुभव का विषय ही स्मृति का विषय है।

यदि ऐसी बात है तो केवल संस्कार से काम चल जायेगा एक स्थायी आत्मा को मानने से कौन सा प्रयोजन सिद्ध होनेवाला है। घेघ बड़े हुए गले के रोग के समान व्यर्थ ही आत्मा की सत्ता मानना है ॥ ५ ॥

जैसे 'घेघ' गले का फूल जाना केवल पीड़ा ही देता है, उसी प्रकार आत्मा को स्थिर मानना केवल कल्पना का कष्ट सहना है। उस आत्मा से क्या प्रयोजन सिद्ध होगा, समस्त जगत का व्यवहार-परिवार संस्कार से ही हाथ में आजायेगा ॥ ५ ॥

'ननु' कहकर प्रश्न करते हैं कि तब फिर उस संस्कार का आश्रय कौन है यह कहना होगा, वही संस्कार गुण होने के कारण अपने आश्रय द्रव्य की अपेक्षा रखता है। उसका आश्रय द्रव्य है वही आत्मतत्त्व है—ऐसी आशङ्का कर उत्तर में कहते हैं कि—भिन्न-भिन्न धर्मों के रहते हुए आत्मा के स्वरूप में भेद न होने से संस्कारमात्र से ही स्मृति सिद्ध हो जाने पर द्रष्टा के समान स्मरण करनेवाला भी वही आत्मा है ॥ ६ ॥

---

१. जो संस्कार धर्मरूपी गुण है वह स्वतन्त्र नहीं होता है—इसका कोई न कोई धर्मी अवश्य होगा, यदि ज्ञान-सन्तान को ही संस्कार का धर्मी मान लिया जाये, तो पहले ज्ञानों से भिन्न कोई सन्तान ही नहीं बन पाता है जिससे ज्ञान सन्तान हो सके, यदि वह सन्तान ज्ञानों में ही संस्कार रूप से रहता है तो भी ऐसा कहना संगत नहीं हो सकता, अन्यत्र किया हुआ अनुभव का विषय, किसी अन्य में संस्कार रूप होकर स्मृति को पैदा नहीं कर सकता है, यह लोक में प्रसिद्ध नहीं है कि चैत्र को अनुभव हो और

इह संस्कारे जायमाने, यदि आत्मनो विशेषः, स तर्हि अव्यतिरिक्तः—इति न नित्य आत्मा स्यात्; अथ न कश्चित् अस्य विशेषः, तेन तर्हि किम्। अथ संस्कार एव अस्य विशेषः, तर्हि न व्यतिरिक्तोऽसौ—इति, पुनरपि अनित्ये ज्ञाने संस्कारः—इत्यायातम्। अनुभवाद्विशिष्टं विशिष्टस्मृत्याख्यकार्यकारि ज्ञानं परम्परया जायते–इति इयानेव संस्कारार्थः। अथ संस्कारात्मा व्यतिरिक्तो विशेषः, तस्य तर्हि किमसौ। संबन्धश्च व्यतिरिक्तो निराकरिष्यते। एवं ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि विकल्पनीयाः। एतदाह—'ततः' इति आत्मनो 'भिन्नेषु धर्मेषु' अङ्गीक्रियमाणेषु तेषु सत्स्वपि, आत्मनः 'स्वरूपे' विशेषाभावात् स तावत् आत्मा स्मृतौ न व्याप्रियेत, अस्मर्तृरूपासंस्कृतरूपादिप्राच्यरूपानपायात्—इति 'संस्कारादेव स्मृतेः सिद्धिः'—इति। अहं स्मरामि—इति

अनित्य संस्कार जिसमें उत्पन्न हो जाय वह भी अनित्य क्यों न हो जाय, वह आत्मा तो संस्कार से भिन्न नहीं हुआ, इसीलिए आत्मा भी नित्य नहीं होगा; इसमें कोई विशेषता नहीं हुई, उस आत्मा से क्या लाभ होगा, संस्कार ही इसकी यदि विशेषता मानी जाय, तो वह आत्मा संस्कार से भिन्न नहीं हुआ; फिर भी अनित्य ज्ञान में संस्कार होता है यही बात सिद्ध हुई। अनुभव से विशिष्ट ज्ञान और विशिष्ट ज्ञान से स्मृति नामक कार्य करनेवाला ज्ञान परम्परा द्वारा उत्पन्न होता है, यही सब संस्कार का अर्थ है। यह संस्काररूप आत्मा भिन्न विशेष हुआ, उस संस्कार का आश्रय आत्मा कैसे बनेगा। और इन दोनों का सम्बन्ध भी भिन्न नहीं मानेंगे। इस प्रकार ज्ञान, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म को भी मानना होगा। इसी बात को लेकर कहा है कि 'ततः' आत्मा के 'भिन्नेषु धर्मेषु' भिन्न-भिन्न धर्मों को स्वीकार करने पर भी आत्मा के 'स्वरूपे' स्वरूप में कोई भेद न होने के कारण वह आत्मा स्मृति में सम्मिलित नहीं होगा, स्मरणकर्ता होने से, संस्काररूप पूर्व का धर्म न होने से, इसी कारण 'संस्कार से ही स्मृति होती है' यह बात सिद्ध हुई। स्मरण करता हूँ; जो स्मरण करने

---

मैत्र को स्मृति हुई हो अर्थात् चैत्र-मैत्रादि प्रमाताओं के भेद होने के कारण ऐसा वृतान्त नहीं देखने में आया है। इसलिए अनुभव और संस्कार के अभेद को मानना पड़ता है, और वह स्वरूप से तो उपलब्ध होता नहीं देखा जाता है विलक्षण स्वभाव वाला होने के कारण—अतः आश्रय एक रहता है और अनुभव एवं संस्कार में आश्रय के द्वारा अभेद की सिद्धि हो जाने पर तो सुखादिकों की भी प्रतिसन्धि सिद्ध हो जाती है। इसलिए संस्कार का आश्रय एकमात्र आत्मा ही है और एक होने के कारण जो स्थिर है वही आत्मा है। पूर्वपक्षी के मत को लेकर शंका खड़ी करते हैं—आत्मा में संस्कार के अनुदित होने से तो पूर्व के समान अनित्य ही हो जायेगा, इसलिए संस्कार से ही पूर्वोक्त युक्ति से स्मृति की सिद्धि हो जाती है। जो कि मैं स्मरण करने वाला हूँ—ऐसा भासता है, तब तो अहं प्रतीति जो उसमें हो रही है वह आत्मा नहीं है क्षणिकता एवं अस्थिरता के कारण, वेद्य-वेदन से भिन्न कोई द्रष्टा या स्मर्ता रूप नहीं दिखायी देता है। संस्कार का उदय होने पर भी स्मृति में कोई बाधा नहीं पड़ती है उदित संस्कार होने पर तो उसके स्वरूप को अंश मात्र से भी विलक्षणता होने के कारण तथा वैलक्षण्य भाव तो संस्कार में ही रहता है यदि भिन्न होकर तो पूर्वापरी भाव नहीं बन सकता है क्योंकि तब तो अनित्य हो जायेगा भिन्न रहने पर तो वह कुछ भी नहीं रहेगा। इसलिए संस्कार का कुछ भी आश्रय न होने से स्मृति की उपपत्ति में बाधा पड़ेगी।

यः 'स्मर्ता' सोऽपि शरीरसंतानो, ज्ञानसंतानश्च अध्यवसीयते, यथा 'द्रष्टा'। पूर्वं हि उक्तम्—

'अहंप्रतीतिरप्येषा शरीराद्यवसायिनी।' ( १।२।२ )

इति। एवम् आत्मनि साधकं प्रमाणं प्रत्यक्षमनुमानं च पराकृतं, बाधकं च सूचितं—धर्मयोगे नित्यताहानिः, अन्यथा किं तेन। तदुक्तम्—

'वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः　　खतुल्यश्चेदसत्समः॥' इति॥ ६॥

इत्थम् आत्मानं निराकृत्य, तस्य ऐश्वर्यमपि निराकर्तुं, ज्ञानशक्तिमेव परीक्षितुमाह—

**ज्ञानं च चित्स्वरूपं चेत् तद् अनित्यं किमात्मवत्।**
**अथापि　जडमेतस्य　कथमर्थप्रकाशता॥ ७॥**

वाला है वह भी शरीर सन्तान-प्रवाह और ज्ञान-सन्तान-प्रवाह है, यही निश्चय किया जाता है। जैसा कि 'द्दष्टा' हमारे यहाँ सन्तान-प्रवाह है। क्योंकि यह बात हमने पूर्व में ही कह दी है "अहं प्रतीतिरप्येषा शरीराध्यवसायिनी।" (१-२-२) इस प्रकार आत्मा के विषय में साधक प्रमाण प्रत्यक्ष और अनुमान को हटा दिया, और बाधक प्रमाण को सूचित कर दिया। ज्ञानादि धर्म के योग होने पर नित्यता की हानि होगी, ये सभी नहीं रहेंगे तो, आत्मा भी नहीं रहेगा। इस विषय में कहा भी गया है—

वर्षा और ताप से आकाश का क्या बिगड़ता है। चूँकि वर्षा और ताप का फल तो चमड़े पर पड़ता है। यदि आत्मा चमड़े के समान है तो फिर आत्मा अनित्य हो जायेगा एवं आकाश के समान है तो फिर नहीं के बराबर होगा॥ ६॥

इस प्रकार आत्मा नाम की कोई वस्तु नहीं है, इस बात का निराकरण कर, उसके ऐश्वर्य निराकरणार्थ अब ज्ञान शक्ति की परीक्षा करने के लिए कहते हैं—

यदि ज्ञान चित्स्वरूप है तो क्या वह आत्मा की तरह अनित्य है और यदि उसे जडरूप मानोगे तो फिर पदार्थों का प्रकाश कैसे करेगा॥ ७॥

---

१. कल्पित जिसकी सिद्धि के लिए सम्भव नहीं होता है, तब फिर उसकी सिद्धि के लिए कल्पना नहीं हो सकेगी, जैसे अंकुर की सिद्धि के लिए आकाशपुष्प, इसलिए कोई नित्य आत्मा है—ऐसा मानना पड़ेगा, जो कि स्मरण का प्रतिसन्धान कराता है। इसमें कल्पना का नियमन करने वाला व्यापक ही होता है, नहीं तो, वह नहीं ठहर सकती, यदि वह समर्थ तभी उसकी सिद्धि के लिए कल्पना हो सकेगी। अन्यथा नहीं हो पायेगी। ऐसा न होने पर व्यापकत्व इसका विनष्ट ही हो जायेगा। इसीलिए इसकी सिद्धि के लिए कल्पना की जाती है और वह प्रभविष्णु विषयत्व से व्याप्त है। इसी कारण व्यापकत्व नहीं दिखायी देता और व्यापक की अनुपलब्धि हो रही है। अतः 'वर्षातपाभ्यामिति' इस वाक्य से ऐसा कहा है। जिसके रहने पर ही दूसरे की कल्पना होती है। उसी को हेतु बनाकर सब जगह हेतु मानना चाहिए क्योंकि हेतुओं की अनवस्था हो जायेगी।

पराभ्युपगमेन प्रसङ्गापादनम् एतत् पूर्वपक्षवादी करोति–प्रसङ्गविपर्ययलाभो मे भविष्यति- इति। तत्र आत्मवादी नित्यत्वम् आत्मन इत्थं ब्रूते—इह कालो नाम इदंभावविशिष्टस्य विशेषणताम् अवलम्बमानः तं विशिष्टीकुर्वन् तत्संकोचात् अनित्यं संपादयति, आत्मनश्च चित्स्वभावत्वात् इदम्—इति प्रथनाभावेन विशेष्यत्वं नास्ति, विशेषणविशेष्यभावो हि योजकायत्तः, नच स्वप्रकाशे योजकान्तरम् अस्ति। स इत्थं ब्रुवाणः पर्यनुयुज्यते—'ज्ञानमपि' तर्हि स्वप्रकाशम्—इति, तत्रापि एषैव वार्ता—इति। तदपि कस्मात् न नित्यम् ?, नच द्वयोर्नित्ययोः कश्चित् संबन्धः, कार्यकारणभावो हि असौ नान्यः, तत आत्मनो ज्ञानं शक्तिः—इति अवसन्नम् अदः। अथ न स्वप्रकाशं ज्ञानं,

दूसरे के सिद्धान्त को मानकर पूर्वपक्षी प्रसंग उठाते हैं कि प्रसंग से विपरीत लाभ मुझे प्राप्त होगा अर्थात् जिसने नित्य रूप आत्मा माना है ऐसे सिद्धान्ती को उससे उलटा अनित्यत्व का लाभ होगा। आत्मतत्त्व की सत्ता को माननेवाले सिद्धान्ती लोग आत्मा का अस्तित्व इस प्रकार से कहते हैं—काल उसी वस्तु का नाम है जो किसी वस्तु-पदार्थ का विशेषण होकर आता है और वस्तु-पदार्थ को विशिष्ट बनाता हुआ संकोच से उसे अनित्य बना देता है, संकोचित परिच्छिन्न भाव उसमें आ जाने से वह अनित्य हो जाता है और आत्मा चेतन रूप होने के कारण 'इदम्' यह परिच्छिन्न भाव आत्मा का विशेषण नहीं हो सकता है, क्योंकि विशेष और विशेषण ये दोनों संयोजक व्यक्ति के आधीन होता है, स्वप्रकाश आत्मा में कोई दूसरा योजक नहीं हो सकता है। ऐसा कहने पर पुनः उससे प्रश्न किया जाता है कि—'ज्ञानमपि' ज्ञान को भी प्रकाश कहो और उसे भी नित्य मानो, तब तो वहाँ पर भी वही बात हुई। वह ज्ञान भी क्यों न नित्य हो जाय? ज्ञान और आत्मा ये दोनों यदि नित्य होंगे तो कोई सम्बन्ध नहीं बैठता। ज्ञान और आत्मा में कोई कार्य-कारण-भाव भी नहीं बनता है, इसलिए मानो कि आत्मा की शक्ति ज्ञान है। यह प्रसंग यहाँ पर समाप्त हुआ। यदि स्वप्रकाश ज्ञान नहीं होगा, तब तो फिर दूसरे घट-पटादि है उन सबों का

---

१. 'अथ' इत्यादि से कारिका के द्वितीय अर्धभाग की व्याख्या करते हैं—यदि ज्ञान स्वप्रकाशरूप नहीं है, तो दूसरे घटादिकों का भी प्रकाश नहीं कर सकेगा, जिस कारण से वह बोध स्वकीय जो प्रकाश रूप बोध को उसमें प्रवेश करता हुआ घटादिकों का भी अपने प्रकाश के भीतर किये गये दूसरे को प्रकाशित करता है। यह कहा जाता है कि जो नित्यत्व, व्यापित्व और अद्वैत तत्त्व है, इन सबों का प्रसंग बलात् ही आ पड़ेगा, वही दोष अपने पक्ष का उपमर्दन करने के कारण आ जाता है इससे डरपोक आत्मवादी ने यदि ज्ञान को जडरूप मात्र स्वीकार कर लिया, तब तो नील पदार्थ जैसे पीत को प्रकाशित नहीं करता है, उसी प्रकार ज्ञान भी तो अपने से भिन्न पदार्थ को प्रकाशित नहीं कर सकेगा। अब प्रश्न उठता है कि अग्नि आदि जड भी तो वस्तु-पदार्थ को प्रकाशित करते हैं, ऐसी बात नहीं है, प्रकाश के रहने पर ही तो इन दीप, सूर्य, रत्न, प्रभा आदि से प्रकाश निकलता है, प्रमाता के रहने पर ही अर्थ का प्रकाश होता है, न रहने पर नहीं होगा, सैकड़ो प्रदीप के प्रज्ज्वलित करने पर भी जो अर्थ नहीं भासता था वह ज्ञान से वैसा ही क्यों भासने लगता है, जो पदार्थ जातीय सन्निधान के रहने पर जैसा नहीं होता है वह उस विलक्षण जातीय सन्निधान के सम्पर्क में आ जाने पर वैसा ही हो जाता है, जैसे—शीतल जल एवं हिमवायु के सन्निधान में घट अरक्त अनुभूत होता था, वही ऊष्ण-वह्नि की सन्निधि पाकर रक्त [ लाल ] रूप में अनुभूत हो रहा है। जड पदार्थों के साथ में दिखता

तर्हि परस्यापि अदो न प्रकाशः, स्वप्रकाशरूपावेशनं हि असौ परस्य विदधत् बोधः प्रकाशो भवति परस्यापि, ततः स्वपरप्रकाशताशून्यो न असौ अर्थस्य प्रकाशः स्यात्, भावान्तरवत् ॥ ७ ॥

जडोऽपि असौ इत्थम् अर्थस्य प्रकाशो भविष्यति—इति सांख्यमतम् आशङ्कते—

अथार्थस्य यथा रूपं धत्ते बुद्धिस्तथात्मनः ।
चैतन्यं

इह तावत् अर्थं जानामि—इत्यस्ति व्यवहारः। तत्र अर्थस्य प्रकाशः—इति एतावत्-परमार्थः। तत् न अर्थस्य स्वं रूपं, सर्वं प्रति तथात्वप्रसङ्गात्, न कंचित्प्रति वा—इति सर्वज्ञम् अज्ञं वा जगत् स्यात्। नापि अर्थे अन्यत एतद्रूपम् उपनिपतितम्, एष एव हि दोषः स्यात्। तत् नूनम् अन्यत्रैव अयं धर्मः तत्त्वान्तरे, तत्रापि कथम् अर्थस्य प्रकाशः स्यात्—इति नूनं तत्र तत्त्वान्तरे सोऽर्थः प्रतिबिम्बत्वेन उपसंक्रामति। तत् तत्त्वान्तरं सत्त्वप्रधानत्वात् प्रतिबिम्बोपग्रह-

बोध नहीं हो पायेगा जिस कारण से यह अपना स्वप्रकाश बोध उसमें प्रवेश कर दूसरे घटादि को भी स्वप्रकाश से प्रकाशित करता हुआ अपने भीतर दूसरे का भी प्रकाश करता है। स्वप्रकाश का यही लक्षण है कि—अपने आपको प्रकाशित करता हुआ अन्य घटादि का भो अच्छी तरह प्रकाश करावे। यदि अपने को प्रकाशित करने में असमर्थ है तो अर्थ को भी प्रकाशित नहीं कर सकता। जैसे—एक पदार्थ दूसरे पदार्थ को प्रकाशित नहीं कर सकता है ॥ ७ ॥

इस प्रकार जड भी अर्थ का प्रकाश करेगा—अब सांख्यदर्शन के सिद्धान्त की शंका लेकर कहते हैं—

जैसे घट-प्रकाश में बुद्धि रूप को ग्रहण करती है उसी प्रकार आत्मा का चैतन्य प्रकाशक है……

पहले यही होता है कि मैं अर्थ को जानता हूँ—ऐसा व्यवहार होता है। तब अर्थ का प्रकाशक ज्ञान मानना पड़ेगा, यही निछोड़ है। इसलिए अर्थ का अपना रूप कुछ भी नहीं है; ज्ञान उसका रूप नहीं है, ज्ञान आत्मा का रूप है, यदि पदार्थ में स्वयं जनाने की शक्ति होती तो सभी को जनाया करता; सब के लिए वैसा ही प्रसङ्ग आजायेगा, अथवा किसी को कुछ भी नहीं कह सकते हो—इस प्रकार यह जगत् सर्वज्ञ या मूर्ख हो जायेगा। अथ में किसी दूसरी जगह से रूप नहीं आता है, क्योंकि यही दोष होगा। तब तो निश्चय ही अन्यत्र दूसरे तत्त्व में यही धर्म आजायेगा, क्योंकि ज्ञान और पदार्थ एक वस्तु नहीं है, दूसरे तत्त्व में कैसे अर्थ का प्रकाश संभव होगा—इसलिए निश्चित वहाँ पर वह अर्थ अन्य तत्त्व में प्रतिबिम्बित होकर संक्रान्त हो जाता है। ज्ञान अन्य तत्त्व के सत्त्व गुण की प्रधानता से प्रतिबिम्ब ग्रहण करने

---

हुआ भी अजड जातीय का प्रकाश द्योतित करता है, इससे विपरीत होने में कोई कारण नहीं दिखता है। बाधक प्रमाण से व्याप्ति की सिद्धि में स्वभाव ही कारण होता है। अनुभवनिष्ठ निश्चयात्मक ज्ञान में जो किसी अन्य की उपेक्षा न रखने वाली विश्रान्ति है, वे नीलादि विषयों में व्यवस्थितियाँ विविषता-पूर्वक असंकीर्ण रूप से रहने वाली हैं, वे अचेतन-जड अर्थों की व्यवस्था कैसे करेंगे ?

वर्तमानत्वेन स्फुटतया अवभासनम् इदमित्येवमाकारं येषां तेषाम्, यदेतत् बहिरात्मना—कल्पितमायीयशून्यादिशरीरान्तप्रमातृपृथग्भावेन हेतुना भिन्नानां, ततो मायाप्रमातुः विच्छिन्नानाम् 'अवभासनम्' तत् परमार्थप्रमातरि शुद्धचिन्मये 'अन्तःस्थितवतां' तेन सह ऐकात्म्यम् अनुज्झितवतामेव 'घटते' प्रमाणेन उपपद्यते, तेन अनुज्झितसंविदभेदस्य भावस्य कल्पितप्रमात्रपेक्षया भेदेन प्रकाशनं भगवतो ज्ञानशक्तिरित्युक्तं भवति ॥ १ ॥

प्रमाणेनोपपद्यते, इत्युक्तं तत् प्रमाणं दर्शयति—

प्रागिवार्थोऽप्रकाशः स्यात्प्रकाशात्मतया विना ।
न च प्रकाशो भिन्नः स्यादात्मार्थस्य प्रकाशता ॥ २ ॥

अर्थो नीलादिः, तस्य नीलादिरूपतैव यदि प्रकाशमानता न पुनरपरा काचित् अर्थशरीरोत्तीर्णा प्रकाशात्मता तर्हि यथा सर्वान् प्रति नीलमेव तत्सम्भावनया भण्यते, न कञ्चित् वा प्रति, वस्तुतो वा स्वात्मन्येव तत् नीलं परस्य परनिष्ठतानुपपत्तेः, स्वात्मनि वा न नीलं न अनीलम् प्रकाशानुग्रहेण विना व्यवस्थानायोगात् । तथा प्रकाशमानतापि अस्य सर्वान् प्रति न कञ्चित्

उचित है, यदि ऐसा नहीं मानते हो तो अनुभव का ही पहले ज्ञान-शक्ति के रूप से विचार करना पड़ेगा, इस अभिप्राय से कहते हैं—

वर्तमानरूप में अवभासित होनेवाले पदार्थों का ही बाह्यरूप से अवभासित होना घटता है ॥ १ ॥

जिनका देश-काल के आभास से विशिष्ट होकर वर्तमानकाल में भिन्न-भिन्न रूपों से भासित होना ही 'आकार' स्वरूप है उन स्फुटरूप का बाहरी रूप से कल्पित मायीय प्रमाता के भीतर भिन्नभाव से भिन्न हुए का कारण से भासित होना है, इसी कारण माया-प्रमाता से भिन्न होकर भासता है 'अवभासनम्' जो कि मायीय-प्रमाता में भासित हुआ था अर्थात् अविच्छिन्न हुआ था, वही शुद्धचिन्मय प्रमाता में 'अन्तःस्थिताम्' भीतर रहकर उसके साथ एकता को प्राप्त कर न छोड़ते हुए 'घटते' प्रकाश को अपने में बनाये रखता है अर्थात् एकता की स्थिति के प्रमाण से प्रमाणित होता है, इसलिए संविद्रूप भेद को न त्यागनेवाले भाव का कल्पित प्रमाता की अपेक्षा भेद से प्रकाशित होना ही तो भगवान् महेश्वर की ज्ञान-शक्ति है। यही सारांश निकलता है ॥ १ ॥

प्रमाण से प्रमाणित होता है, ऐसा जो कहा है—उस प्रमाण को दिखाते हैं—

पूर्वरूप के बने बिना तो पूर्व की तरह पदार्थ अप्रकाशित ही रहेगा, अपने स्वरूप की प्रकाशरूपता प्रकाश से भिन्न नहीं हो सकती है ॥ २ ॥

जो अर्थ है वह नीलादि पदार्थ है, यदि इसकी नीलादिरूपता ही प्रकाशमानता है, तब तो परमार्थवपु से हटी हुई प्रकाशमानता नहीं हुई। जैसा कि सबके लिए यह नील है इस सम्भाववा से कहा जाता है अथवा किसी के प्रति नहीं भी है, यह कहा जाय, वस्तुतः अपने में ही वह नील है दूसरे में इसकी सत्ता नहीं बन सकती, या अपने में नील नहीं है, अनील नहीं है, प्रकाश के अनुग्रह बिना व्यवस्था का योग नहीं बैठ सकता है तथा प्रकाशमानता भी सबके लिए या किसी के लिए नहीं है, अपितु अपने में है या अपने में भी नहीं है, इससे जगत् में अन्धकार फैल जायेगा। इसलिए

वा प्रति अपि तु स्वात्मन्येव, स्वात्मन्यपि वा न स्यात् इति अन्धता जगतः। अथ इन्द्रियालोकादिक्षणवर्गात् प्रकाशरूपोऽसौ नीलक्षणो विशिष्ट एव जातः, एवमपि स एव प्रसङ्गः, प्रकटतावादेऽपि अयमेव दोषः, सर्वथा अर्थशरीरविश्रान्तः चेत् प्रकाशो मम अवभासते इति प्रमातृलग्नतया प्रकाशस्थितिः दुरुपपादा। प्रमाता हि तदानीम् इन्द्रियार्थमयोऽर्थरूपस्य प्रकाशस्य कारणं भवेत्, बीजमिव अङ्कुरस्य। न च अङ्कुरो बीजापेक्षोऽङ्कुरात्मा, ततो यदि न प्रकाशात्मा स भवेत् 'प्रागिव' ज्ञानोदयात् पूर्वं यथा सोऽप्रकाशः, तथा ज्ञानोदयेऽपि स्यात्। ननु ज्ञानम् अर्थप्रकाशरूपमेव, तत् कथं ज्ञानस्य उदयानुदययोः अर्थस्य तुल्यता स्यात्। स्यात् एतत् यदि उपपद्येत, यावता अर्थात् भिन्नं यत् ज्ञानं प्रकाशरूपं, तत् अर्थस्य सम्बन्धितया कथं स्यात्। यदि तावत् अर्थः प्रकाशते, इत्येवंभूतं ज्ञानस्य स्वरूपं तत् अर्थज्ञानयोः अभेद एवायातः—अर्थस्वभावस्य ज्ञानत्वेन उक्तत्वात्, अर्थस्वभावत्वे च प्रकाशस्य अर्थात्मतायाम् उक्तं दूषणम्। अथ अर्थं प्रकाशयति इति ज्ञानस्य स्वरूपम्, तर्हि प्रकाशमानमर्थं करोति ज्ञानम् इति आपतिते पुनरपि स एव दोषः। कृतप्रतानश्च अयं प्रकृत्यर्थण्यर्थविवेको मयैव भेदवादविदारणे इति तत एव अन्वेष्यः। तस्मात् भिन्नः प्रकाशोऽर्थस्य सम्बन्धी भवति इति सम्भावनैव नास्ति। अतश्च इदम् उपपत्त्या आयातम्—अर्थस्य स्वरूपं प्रकाशमानत्वं प्रकाशाभिन्नत्वम् इति। प्रकाशश्च यदि घटेऽन्यः पटेऽन्यः तदा अनुसन्धानस्य अयोगः—द्वयोः प्रकाशयोः स्वात्ममात्रपर्यवसानात् इति वितत्य उपपादितं

इन्द्रिय आलोकादि क्षण समूह से प्रकाशरूप नीलक्षण [ प्रकाशमान घटरूप ] विशिष्ट ही हो गया, इस तरह भी वही प्रसंग उपस्थित होगा, [ कौमारिलों के मत ] प्रकटतावाद में यही दोष आ जायेगा, सब प्रकार से यदि अर्थ-शरीर में विश्रान्ति मानोगे तो मुझे प्रकाश भासित होता है इस प्रकार प्रमाता में प्रकाश की स्थिति नहीं सिद्ध कर सकते हो; क्योंकि उस समय प्रमाता ही इन्द्रिय और पदार्थ से युक्त होकर अर्थरूप प्रकाश का कारण बनेगा, जैसे अंकुर का कारण बीज होता है और अंकुर बीज की अपेक्षा किये बिना अंकुरत्व प्राप्त नहीं कर सकता, यदि वह प्रकाशात्मा नहीं होता तो ज्ञान के उदय के पूर्व जैसे अप्रकाशित था—उसी प्रकार उदय होने पर भी अप्रकाशित ही रहता।

अब प्रश्न करते हैं कि ज्ञान को भी अर्थप्रकाशवाला ही मान लिया जाय, वह ज्ञान के उदय और अनुदय होने पर अर्थ की समानता कैसे करता। यदि वह कर सकता था तब तो ठीक ही होता, जवतक अर्थ से भिन्न ज्ञान प्रकाशरूप है तबतक अर्थ के सम्बन्धी होकर कैसे रहेगा। प्रथम पक्ष में यदि अर्थ का प्रकाश होता है, ऐसा ही यदि ज्ञाम का रूप है तो अर्थ और ज्ञान में अभेद ही हो गया; क्योंकि अर्थस्वभाव को ज्ञानत्वरूप से कह दिया है और अर्थस्वभाव में प्रकाश का अर्थरूप हो जाने में भी पूर्वोक्त दोष बता दिया है, तृतीय पक्ष में यदि ज्ञान का स्वरूप अर्थ को प्रकाशित करता है, ज्ञान अर्थं को प्रकाशमान करता है पुनः भी यही दोष आ पड़ेगा और इसका अच्छी तरह विस्तार भी कर दिया है—जो यह प्रकृत्यर्थ और ण्यर्थ [ प्रकाशते और प्रकाशयति ] का विचार मैंने भेदवाद खण्डन में कर दिया है इसलिए वहाँ पर ही खोजना होगा। अतः भिन्न अर्थ का प्रकाश अर्थ का सम्बन्धी होता है ऐसी शंका भी नहीं करनी चाहिए। अतः उपपत्ति से यही सम्पन्न हुआ कि अर्थ का स्वरूप प्रकाशमानत्व प्रकाश से अभिन्न है और प्रकाश यदि घट में दूसरा और पट में दूसरा ही है तो फिर अनुसन्धान योग नहीं बन पायेगा; क्योंकि दोनों प्रकाशों को

'नश्येत् जनस्थितिः' इत्यत्र। तस्मात् एक एव प्रकाशः। एतदेव आवृत्त्या दर्शितं 'न च प्रकाशो भिन्नः स्यात्' इति ॥ २ ॥

व्यतिरिक्तस्य ज्ञानस्य अर्थप्रकाशरूपताम् अभ्युपगम्यापि बाधकान्तरमाह—

**भिन्ने प्रकाशे चाभिन्ने संकरो विषयस्य तत्।**
**प्रकाशात्मा प्रकाश्योऽर्थो नाप्रकाशश्च सिद्ध्यति ॥ ३ ॥**

यदि अर्थात् अन्य एव ज्ञानात्मा प्रकाशः अत एव भिन्नोऽर्थतः, तर्हि स्वात्मनि तस्य प्रकाशमात्ररूपत्वात् अभेद एव।

तथाहि नीलस्य प्रकाशः, पीतस्य प्रकाशः इति यो नीलांशः पीतांशश्च, स तावत् ज्ञानस्य स्वरूपम् भेदवादत्यागापत्तेः। अथ विषयः, तदेवेदं विचार्यते—इह प्रकाशबलात् नीलपीतयोः भेदोऽभ्युपगन्तव्यः, येनैव च प्रकाशेन नीलो नील एव इति उपगम्यते, तेनैव च प्रकाशेन पीतः पीत इति कथं संगच्छताम्, नीलेन जनितः, पीतेन जनितः, तेन वा सह एकसामग्रीक इत्यादि यत् उच्यते, तत् सिद्धे नीलपीतयोर्भेदे स्यात्, स एव विचार्यः। अथ

अपने में ही लीन रखते हैं; इसका भी हमने 'नश्येत् जनस्थितिः' में विस्तारपूर्वक कह दिया है। 'न च प्रकाशो भिन्नः स्यात्' इस वचन से इसी बात को बारम्बार ही दिखलाया है ॥ २ ॥

अर्थ से भिन्नज्ञान अर्थप्रकाशरूप ही होता है इस बात को मानकर भी दूसरा बाधक उपस्थित करते हैं—

प्रकाश अर्थ से भिन्न रहने पर यदि तुम अभिन्न मानोगे तो विषय का सांकर्य हो जायेगा। प्रकाशरूप अर्थ प्रकाशित किया जाता है इसीलिए अर्थका प्रकाशित न होना नहीं सिद्ध होता है ॥ ३ ॥

यदि पदार्थ से भिन्न ही ज्ञानरूप प्रकाश है इसलिए अर्थ से भिन्न है, तब तो प्रकाशमात्ररूप होने से ही अपने में उसका अभेद हो जायेगा। जैसे नील का प्रकाश पीत का प्रकाश है उसमें नीलांश और पीतांश है, वही ज्ञान का वास्तविक स्वरूप है, भेदवाद को त्यागना आवश्यक है। अब 'ज्ञान के विषय ऊपर विचार किया जाता है—यहाँ पर प्रकाश के सामर्थ्य से नील और पीत का भेद मानना पड़ेगा और जिस प्रकाश से नील वस्तु नील ही होती है और उसीप्रकार पीत वस्तु पीत ही होती है, यह कैसे मेल खायेगा? [ कौमारिल मत यह है कि साकारता के द्वारा किया हुआ ही यह नियम चलता है—

'तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते ॥'

अनुभव मात्र से अपने सदृश का ज्ञान होना चाहिए। जिससे प्रत्येक कर्म विभाजित हो जाता है। ]

यह नील से पैदा हुआ, पीत से पैदा हुआ, जिस सामग्री से पदार्थ का प्रकाश होगा उसी सामग्री से ज्ञान का भी प्रकाश होगा, नील और पीत का भेद जब सिद्ध होगा तभी यह बात घटेगी, नील पीत का भेद ही तो विचारणीय है। सौत्रान्तिकमत से यदि नीलाकार वह प्रकाश

नीलाकारोऽसौ तत् यदि प्रतिबिम्बबलात् तद्द्वितीयबिम्बानवभासात् अयुक्तम्। अथ अभेदः, तर्हि त्यक्तो भेदवादः, तथा कारणतादिवादे शिखरस्थज्ञानं बहुतरनीलादिजन्यम् एकत्र पटु अन्यत्र मन्दम् इति कथं भेदः—प्रकाशशरीरस्य अभेदात्, तथाभूते च अन्यतरदर्शनोद्बोधितेऽपि संस्कारे बलादेव अशेषस्मरणप्रसङ्ग इति भूयान् संकरः। स्यात् एतत्, अर्थ एवास्तु, किमनेन दोषोपपादकेन प्रकाशेन इति। अत्राह—अप्रकाशस्य प्रसिद्धिरेव न काचित्, स्वात्मनि हि नीलं यदि पीतं न किंचित् वा; तत् किं दुष्येत्, अत एव ग्रन्थकृतैव अन्यत्र उक्तम्—

एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी।
जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः॥

इति, तत् यदि प्रकाशः तदा भवति अर्थः, प्रकाशश्च असौ कथम्। यदि प्रकाशतैव घटस्य वपुः सैव पटस्य इत्यादि विश्ववपुः प्रकाशः सिद्धः॥ ३॥

एकस्यैव प्रकाशस्य एवंभूतक्रमाक्रमकार्यकारणभावादिविचित्रवैश्वरूप्यप्रदर्शनसामर्थ्यरूपम् ऐश्वर्यम्, इति तावत् पर्यवसाययितव्यम्। तच्चैवं पर्यवस्यति, यदि प्रकाशस्य विचित्रभावे हेत्वन्तरम् अपाकृतम् तत्र प्रकाशस्य अविचित्रस्य क्रमेण विचित्रताकारणं प्रतिबिम्बात्मकं,

प्रतिबिम्ब के बल से होता है तो वह प्रकाश द्वितीय बिम्ब के भाससे नहीं हो सकता, विषय की संकीर्णता आ जायेगी। यदि अभेद कहो, तो फिर भेद छोड़ना पड़ेगा, पाटवादि की संकीर्णता होने से कारणतावाद स्वीकार करने पर चोटी का स्थान अत्यन्त अधिक नीलादि से जन्य होगा, एक जगह पटु है तो दूसरी जगह मन्द है यह भेद कैसे होगा ? प्रकाश शरीर के अभेद होने से। [ स्मृति द्वारा संकर दिखाते हैं ] स्मृति के द्वारा अभिन्न मानने पर दूसरों को देखने पर संस्कार उद्बुद्ध होगा तो भी एक ही बार सम्पूर्ण = अशेष के स्मरण का प्रसङ्ग आ पड़ेगा इस प्रकार बहुत से संकर पैदा हो जायेंगे। यह भले ही होता हो; नीलादि पदार्थ रहे, दोष को उत्पादन करनेवाले प्रकाश से क्या प्रयोजन है अर्थात् पदार्थ ही रहे प्रकाश न रहे। यहाँ पर स्मृति में कहते हैं कि अप्रकाश की कोई प्रसिद्धि ही नहीं है, यदि अपने स्वरूप में नील या पीत [ अनील ] कुछ भी न हो तो क्या बिगड़नेवाला है, अत एव स्वयं ग्रन्थकार ने ही दूसरी जगह कहा है—

इस प्रकार आत्मा में नहीं के बराबर रहते हुए भी ये सारे के सारे जड पदार्थ प्रकाश के ही स्वरूप हैं। प्रकाश न तो प्रकाश से भिन्न है और न अर्थ से ही भिन्न है परात्मा के साथ अपना ही प्रकाश है। [ स्वयं प्रकाशरूप ज्ञान से अर्थ अभिन्न ही रहता है ] यदि वह प्रकाश है तभी अर्थ है, नहीं तो अर्थ कहाँ रहेगा अर्थात् प्रकाश में अर्थ रहता है। यदि प्रकाशता ही घट का स्वरूप है और वही पट का भी है तो फिर विश्व का स्वरूप ही प्रकाश का स्वरूप सिद्ध होगा [ इसलिए बोधरूप प्रकाश से अभिन्न ही अर्थ रहता है। यही सिद्धान्त है। ]॥ ३॥

इस प्रकार क्रम-अक्रमरूप से, कार्य-कारणभावादिसे विचित्र-चित्र विश्व के रूप को दिखाने का सामर्थ्यवाला यह सारा ऐश्वर्य एक प्रकाश का ही है, [ स्वयं अपने आगम शास्त्र की युक्ति से और दूसरों की भी युक्ति से निश्चय होने पर हृदयङ्गम करना चाहिए। ]

इस प्रकार वह समाप्त हो जाता है, प्रकाश के विचित्र भाव में सौत्रान्तिक ने दूसरा हेतु दिया था—उसे खण्डित किया, वहाँ पर अविचित्र प्रकाश क्रम से विचित्र बनाने का कारण

तत्प्रतिबिम्बसजातीयं यत् तदेव नीलादिरूपं बाह्यम्, तच्च यद्यपि अनुमेयं, तथापि इदं नीलमिति प्रत्यक्षेण अध्यवसायात् अध्यवसायप्राणितत्वाच्च प्रमाणस्थितेः प्रत्यक्षव्यपदेश्यं भविष्यति। बाह्यार्थवादिकथितमिति हेत्वन्तरम् अनुमीयमानं बाह्यरूपम् आशङ्क्यमानत्वेन प्रदर्शयति—

तत्तदाकस्मिकाभासो बाह्यं चेदनुमापयेत् ।
न ह्यभिन्नस्य बोधस्य विचित्राभासहेतुता ॥ ४ ॥
न वासनाप्रबोधोऽत्र विचित्रो हेतुतामियात् ।
तस्यापि तत्प्रबोधस्य वैचित्र्ये किं निबन्धनम् ॥ ५ ॥

इह बोधः तावत् अभिन्नः, प्रकाशमात्रमेव हि अस्य परमार्थः, प्रकाशाधिकं यदि नीलस्य रूपं, तर्हि तत् अप्रकाशरूपम् इति न प्रकाशेत। अथ तथा प्रकाशत्वमेव अस्य रूपम्, पीतप्रकाशः कथं स्यात्। अथापि क्रमिकनीलपीतादिप्रकाशरूपमेव तस्य रूपम्, नीलाद्याभासशून्योऽहमिति प्रकाशः स्वापाद्यवस्थासु न स्यात्। तस्मात् प्रकाशः प्रकाश एव, अणुमात्रमपि न रूपान्तरम् अस्य अस्ति इति अभिन्नो बोधः, तस्य च अभिन्नस्य कदाचित् नीलाभासता कदाचित् पीताभासता इति ये विचित्राभासाः तत्र कारणत्वम् हि यस्मात् न उपपन्नम्—हेतौ अभिन्ने कार्यभेदस्य असंभवात्, तस्मात् स स विचित्रनीलपीतादिरूप आकस्मिकोऽज्ञातप्रत्यक्षसिद्धहेतुकः सन् बाह्यं विज्ञानगत-

प्रतिबिम्ब रूप था, उस [ नीलादिजातीय ] प्रतिबिम्ब के समान सजातीय जो बाह्य नीलादि रूप है और वह यद्यपि अनुमान का विषय है, फिर भी यह नील है—ऐसा प्रत्यक्ष ज्ञान होने से और अध्यवसाय से जीवित होने के कारण प्रमाण की स्थिति से प्रत्यक्ष कहना पड़ेगा। यही बाह्यर्थ-वादी का कहा हुआ दूसरा हेतु बाह्यरूप से अनुमान किये जानेवाले के प्रति आशङ्का करके प्रदर्शित करते हैं—

वह अज्ञात हेतुक आकस्मिक आभास यदि बाह्य पदार्थ का अनुमान करावें तो उससे अभिन्न ज्ञान का विचित्राभास हेतु नहीं बन सकता है ॥ ४ ॥

इसी ढङ्ग से विचित्र वासना का ज्ञान भी हेतुता को नहीं प्राप्त करेंगा। उस ज्ञान की भी विचित्रता में क्या कारण होगा। इसलिए बाह्य अर्थ ही आभास की भिन्नता में हेतु हैं ॥ ५ ॥

ज्ञान पदार्थ से भिन्न नहीं है, प्रकाश से [ विरुद्ध ] अधिक नील का स्वरूप होता तो, वह अप्रकाश रूप हो जायेगा और प्रकाशित ही न होगा। नील रूप से ही इसका स्वरूप स्फुरित होता है नील का पीत से भेद होने से पीत का प्रकाश कैसे होगा। क्रम से नील पीतादि प्रकाशरूपता ही इसका स्वरूप है, नीलादि आभास से शून्य जो अहं प्रकाश है वह स्वप्न-मूर्च्छादि अवस्था में रहता है। इसीलिए प्रकाश को प्रकाश ही मानो, थोड़ा-सा भी इसका दूसरा रूप नहीं होता है, अतः पदार्थ प्रकाश से अभिन्न ही ज्ञान प्रकाश है, और उस प्रकाश को अभिन्न ही मान लिया जाय तो कभी नील का होना ये जितने भी विचित्र आभास हैं उन विचित्र आभसों में [प्रकाश की] कारणता का न होना नहीं बनेगा; क्योंकि हेतु के अभिन्न होने पर कार्य का भेद नहीं हो सकता है, इसीलिए वह विचित्र नील-पीतादिरूप जो आकस्मिक अज्ञात प्रत्यक्ष से सिद्ध हेतुवाला होता

प्रतिबिम्बात्मकस्वस्वभावसंपादकम् औचित्यवशात् निजरूपसदृशं क्रमोपनिपतद्रूपबहुतरभेदात्मकं ज्ञानात् सर्वथा पृथग्भूतम् अनुमापयति इति संभावयते बाह्यार्थवादी। न च अस्य इदं संभावनामात्रम् अपि, तु निश्चयपर्यवसायि एव भवति। तथाहि विज्ञानवादिना यो हेतुः वैचित्र्ये वासनाप्रबोधलक्षण उक्तः स न उपपद्यते। 'स्मृतिजनकः संस्कारो वासना' इति तावत् प्रसिद्धम्, इह तु अनुभववैचित्र्ये हेतुः पर्येषणीयो वर्तते। अस्तु वा नीलाद्याभाससंपादनसामर्थ्यरूपा ज्ञानस्य योग्यतात्मिका शक्तिः वासना, तस्याश्च स्वकार्यसंपादनौन्मुख्यं प्रबोधः, ततो बोधेषु आभासवैचित्र्यम् इति। तत्रापि तु ब्रूमः—यद्यपि आभासानां ज्ञानान्तर्वर्तिनाम् अपारमार्थिकं संवृतिसत्त्वम् उच्येतापि, तथापि यत् एषां कारणम् तत् वस्तुसदेव अङ्गीकार्यम्—अवस्तुनः सर्वसामर्थ्यविरहितालक्षणस्य कार्यसंपादनप्राणितसामर्थ्यात्मकस्वभावानुपपत्तेः। एवं-स्थिते या एता वासना आभासकारणत्वेन इष्यन्ते, तासां बोधात् यदि भिन्नं रूपम्, तच्च परमार्थसत्, तत् अयं शब्दान्तरप्रच्छन्नो बाह्यार्थवादप्रकार एव। अथ संवृतिसत्, तर्हि तेन रूपेण कारणतानुपपत्तिः, अथ येन रूपेण आसां पारमार्थिकता तेन कारणता। तत् तर्हि ज्ञानमात्रं, तच्च अभिन्नम्, इति नीलाद्याभासरूपस्य कार्यभेदस्य असिद्धिः। एवं वासनानाम् अविचित्रत्वे तत्प्रबोधो विचित्र इति

हुआ भी अप्रकाशमान बाह्य विज्ञानगत प्रतिबिम्बरूप अपने स्वभाव को स्वतन्त्र बनानेवाला, उचित होने के कारण अपने स्वरूप के सदृश क्रम से आनेवाले बहुत से भेद ज्ञान सर्वथा अलग रखे हुए अपने को अनुमान करावेंगे, बाह्यार्थवादी की यही सम्भावना है और इसकी यह सम्भावना मात्र ही नहीं है—अपितु निश्चय ही पर्यवसाय होता है। विज्ञानवादी के द्वारा जो वासना-प्रबोधरूप हेतु विचित्रता में कहा है वह सङ्गत नहीं बैठता है। 'स्मृति जनकः संस्कारो वासना' स्मृति का जनक संस्कार वासना है, यह तो प्रसिद्ध ही है, यहाँ तो अनुभव की विचित्रता में जो हेतु है उसे खोजना चाहिए। अथवा ज्ञानके नीलादि आभास को सम्पादन करने की सामर्थ्यवाली योग्यतात्मिका-शक्ति वासना है और वह वासना अपने नीलादिरूप का सम्पादन करने की उन्मुखता रखती है यही ज्ञान-शक्तिरूपता है, इसी कारण बोधादि में आभास की विचित्रता दिखायी देती है। सौत्रान्तिकने जो युक्ति दी है, उस पर भी हम कहते हैं—ज्ञान के भीतर आभासित होनेवाले पदार्थों की अपारमार्थिक संवृत्ति-विकल्प बुद्धि है; यदि ऐसा कहते हो, तो भी जिसका जैसा कारण है उस वस्तु का कार्य भी सद्रूप ही स्वीकार करना होगा—अवस्तु तो सामर्थ्य से रहित होती है एवं कार्य साधने की योग्यता उसमें नहीं रहती है। [ ऐसी स्थिति में तो हमारे मनोरथरूपी कल्पवृक्ष से यह फलित हुआ कि हमारे हो सिद्धान्त में आप आ गये हो ] इस तरह ये वासनाएँ आभास की हेतुता खोजती हैं, उनका यदि ज्ञान से भिन्न रूप होता तो वह वस्तुतः परमार्थ सत् ही है उसको दूसरे शब्दों से यह समझो कि प्रच्छन्न-छिपा हुआ ही बाह्यार्थवाद है। अब कहो कि कारण को भी सद्रूप माना जाय तब तो विकल्प-बुद्धिरूप से कारणता की सिद्धि ही नहीं बन पायेंगी, अब तो यही कहना ठीक होगा कि जिस रूप से इन आभास-पदार्थों की पारमार्थिकता है उसी रूप से आभास पदार्थों की कारणता भी माननी होगी। तब तो ज्ञानमात्र ही रह जायेगा और उसी की अभिन्नता भी रह जायेगी—ऐसा माना जाय, जो नीलादि आभास रूप हैं उनमें कार्य भेद की सिद्धि नहीं हो सकती हैं। एवं वासनाओं की अविचित्रता होने पर उसका बोध विचित्र कैसे होगा अर्थात् कोई आशा भो इसमें नहीं होती है। अथवा भले ही

का प्रत्याशा। भवन्तु वा वासना भिन्नाः, तथापि बोधमात्रातिरिक्तस्य देशकालभावादेः प्रबोधकाभिमतस्य विचित्रस्य कारणस्य अभावात् प्रबोधोऽविचित्र इति एक एव प्रबोधः इति सममेव नीलादिवैचित्र्यं भासेत। अथ स्वसन्तानवर्तीनि बोधान्तराणि विचित्राणि प्रबोधकारणानि इति, तदसत, सुख-दुःख-नील-पीतादि-पूर्वापरादिदेश-कालभेदस्य विज्ञानमात्ररूपत्वे विज्ञानस्य च प्रकाशमात्रपरमार्थतायां स्वरूपभेदासम्भवे बोधवैलक्षण्यानुपपत्तेः। परप्रमातृरूपेषु बोधान्तरेषु सन्तानान्तरशब्दवाच्येष्वपि तुल्योऽयम् अवैलक्षण्यप्रकारः। तत्रापि परकीयाभिमतस्य कृशस्थूलादेः कायस्य, श्वासप्रश्वासादेः प्राणस्य, सुखदुःखादेः धीगुणस्य, अनुमात्रभिमतसंविन्मात्ररूपाभेदे परत्वं कस्य इति न विद्मः। बोधस्य तन्निष्ठस्य इति चेत्, सोऽपि प्रमाणेन यदि न सिद्धः तत् असन् एव, सिद्धोऽपि प्रमेयतया चेत् तत् जड एव, तथापि च कायादिवत् एव ज्ञानमात्रस्वभावः—स्वसंविन्मात्ररूपत्वे परं प्रति अस्य असिद्धेः। ननु व्याहारादिक्रिया स्वात्मनि इच्छया व्याहरेयम् इत्येवंरूपया हेतुभावेन व्याप्ता दृष्टा तत् चैत्रकायेऽपि तया तद्धेतुकया भाव्यम्। न च मत्संततिपतिता समीहा अस्ति इति स्वसंवेदनेन निश्चितम्, ततश्च परसमीहा सिद्धयति, तदेव

वासना भिन्न हो, फिर भी बोधमात्र से अतिरिक्त जो देश-कालादि हैं उसे प्रबोध करनेवाले के माने हुए विचित्र कारण का अभाव होने से बोध अविचित्र ही रहता है एक ही [ आभास रूप ] प्रबोध नीलादि विचित्रता को युगपत् भासित करेगा। [ विज्ञानवादी के मत की आशंका 'अथ' शब्द से करते हैं ]

अपने सन्तान 'प्रवाह' में रहनेवाले अन्य-अन्य ज्ञान विचित्र कारण होंगे, ऐसा बाह्यार्थवादी का कहना ठीक नहीं बैठता है, क्योंकि सुख-दुःख नीला-पीतादि, पूर्वोत्तर देश-काल के भेद का विज्ञानमात्र स्वरूपत्वमें और विज्ञान का प्रकाशमात्र परमार्थरूप में स्वरूप भेद सम्भव नहीं होने से बोध की विलक्षणता नहीं बैठ सकती है। इसीमें दूसरे पक्ष से कहते हैं। प्रमातृरूप दूसरे बोध में, दूसरे सन्तान प्रवाह शब्द के वाच्य में बोध की स्वरूपता अभिन्न ही रहती है अर्थात् दूसरे सन्तान में भी समानता का ही समर्थन किया जाता है। अभेदता में भी दूसरे से माना हुआ कृश-स्थूलादि शरीर का श्वास-प्रश्वासादि प्राण का, सुख-दुःखादि बुद्धि के गुण का, अनुमान करनेवाले के अभिज्ञान मात्र से अभेद होनेसे किसको तुम परत्व कहोगे; यह हमारी समझ में नहीं आता है।

यदि बोधको परनिष्ठ मानते हो तो, वह भी प्रत्यक्ष प्रमाण से यदि सिद्ध नहीं है तब तो वह असत् ही है, प्रमेयरूप [ बोधरूप ] से यदि सिद्ध भी मान लिया जाय तो भी वह जडरूप ही हो जायेगा और जडता होने पर भी शरीरादि के समान ज्ञानमात्र स्वभाववाला परनिष्ठ अर्थात् जडरूप ही होगा, ज्ञानमात्ररूप होनेपर वह दूसरों के प्रति असिद्ध हो जायेगा; क्योंकि ज्ञानोंकी परस्पर संवेदता नहीं बनती है।

'ननु' कहकर [ सौगत ] बौद्धलोग प्रमाण देते हैं कि व्याहारादि क्रिया [ बोलना ] अपने आप [ स्व सन्तान ] में इच्छा से बोलेंगे इस हेतु रूप भाव से व्याप्त देखी गयी है वही चैत्र के शरीर में भी उसी [ इच्छारूप हेतु ] से होनी चाहिए। क्षण सन्तान में आनेवाली अन्य की इच्छा नहीं है अपने अनुभव ज्ञान से निश्चित होती है इसीलिए दूसरे की इच्छा सिद्ध हो जाती है, वही

**संतानान्तरम् इति। अत्रोच्यते—इह अनुमातुः व्याहाराभासो द्विधा भवति—व्याप्तिग्रहण-कालेऽविच्छेदप्राणोऽहं व्याहरामि इत्येवंरूपः। अनुमानावसरे च 'व्याहरति अयम्' इति विच्छेद-जीवित इति अन्यस्य व्याप्तिः गृहीता, अन्यश्च आभासः कथम् इदानीं हेतुः स्यात्, व्याहरति इति आभासस्य च हेतुः अविदित एव इति कथं ततो हेतोः समीहा अनुमीयेत, किं च 'व्याहरति अयम्' इति यः प्रमात्रन्तरेऽनुमातृसंमते विच्छिन्नतया अवभासः सोऽनुमेयसंमतायाः परसमीहायाः कथं कार्यः स्यात्। तस्या हि व्याहरामीत्याभासः कार्यो योऽसौ अविच्छेदजीवितः। न च अविच्छेदमयस्य विच्छेदमयः कार्यम् इति युक्तम्—तथाभूतकार्यकारणभावग्रहणोपायाभावनात्, नहि स्वात्मनि योऽयम् अविच्छिन्नाभासः, स परत्र विच्छिन्नं 'व्याहरति अयम्' इत्येवंरूपम् आभासं जनयति, इति केनचित् प्रमाणेन सिद्धम्—परसिद्धिपूर्वकत्वात् अस्य अर्थस्य, परप्रमातृसिद्धेश्च। एवंभूतार्थसिद्धयधीनत्वेन इतरेतराश्रयात्। न च अवश्यम् अविच्छिन्नात् विच्छिन्नेन भाव्यम् इति नियमोऽस्ति व्यभिचारात्। न च विच्छिन्नोऽपि आभास उत्पद्यताम्, इति तदनुसन्धानात् तदुत्पत्तिः नियता—तत्सद्भावेऽपि अनुत्पत्तेः तदभावे च उत्पत्तेः, विच्छिन्न आभासः परत्र उत्पद्यताम् इति या समीहा तया सह परत्र उत्पन्नस्य विच्छिन्नाभासस्य कार्यकारणभावग्रहणमेव परासिद्धौ न युक्तम्**

परकाय चैतन्य है अर्थात् दूसरा सन्तान है। [ अब सौत्रान्तिक लोग दूसरे सन्तान अनुमान के विषय में कहते हैं ] यहाँ पर अनुमान करनेवाले का व्याहाराभास दो प्रकार का है [ दूसरे का व्याहार ही समीहापूर्वक हो सकता है, हमारे व्याहार की तरह ] व्याप्ति ग्रहण काल में भिन्न काल न होता हुआ अविच्छेदरूप से मैं बोलता हूँ—ऐसा ही यह होगा और अनुमान काल में 'व्याहरति अयम्' भेद मूलक अन्य की व्याप्ति गृहीत होती है और विच्छेद प्राणवाला आभास कैसे दूसरों की समीहा का गमक [ बतानेवाला ] होगा, 'बोलता है' इस आभास का इच्छारूप हेतु अविदित ही है कैसे उसकी इच्छा अनुमान करेगी और भी 'व्याहरति अयम्' यह दूसरे प्रमाता में अनुमातृरूप से माना गया भेदपूर्वक अवभास अनुमेयरूप से मानी गयी दूसरे की इच्छा का कैसे कार्य हो सकता है। 'मैं कहता हूँ' यह आभास अपना स्वातम अविच्छेदरूप से प्राणित है और अविच्छेदरूप [ व्याहरामि इत्येवं रूपाभासस्य ] का विच्छेदरूप [ व्याहरति अयम् ] से कार्य होना उचित नहीं है, उसी प्रकार होनेवाले कार्य-कारणभाव ग्रहण करने के लिए कोई उपाय नहीं है, अपने में होनेवाला जो 'व्याहरामि' अविच्छेद आभास है वह [ अनुमेय ] दूसरी जगह में विच्छिन्न होकर 'व्याहरति अयम्' इस रूप में आभास पैदा करता है, किस प्रमाण से सिद्ध होगा, क्योंकि ये अर्थ दूसरे के सिद्ध होने पर ही सिद्ध होते हैं [ अविच्छिन्नाभास के रहने पर विच्छिन्नाभास उत्पन्न होता है ] इस प्रकार से तो अन्योन्याश्रय दोष आ जायेगा। अविच्छिन्न आभास से कहीं विच्छिन्नभास होता है अर्थात् 'व्याहरामि' की जगह 'व्याहरति अयम्' ऐसा क्या बोला जा सकता है ? नहीं, यह नहीं हो सकता है और ऐसा कोई नियम भी नहीं है जो अविच्छन्ना-भास से विच्छिन्नाभास होता हो, यदि मानते हो, तो इसका व्यभिचार होगा। विच्छिन्नाभास 'व्याहरति अयम्' दूसरे प्रमाता में उत्पन्न नहीं हो सकता है। अविच्छिन्नाभास के अनुसन्धान से ही विच्छिन्नाभास की उत्पत्ति सम्भव है—अविच्छेद के अभाव में उत्पन्न नहीं हो सकता और अविच्छेद के रहने पर उत्पन्न होगा, परप्रमाता में 'व्याहरति अयम्' ऐसा उत्पन्न हो, उसके साथ दूसरे प्रमाता में उत्पन्न विच्छिदाभास परप्रमाता के सिद्ध न होने से कार्य-कारणभावादि का

इति व्याप्तेरेवासिद्धिः। प्रमात्रन्तराणि च यदि भिन्नानि तदा तन्निष्ठानाम् अवभासानां भेद एव, 'ज्ञानादव्यतिरिक्तं च' इति न्यायात्। ततश्च एकाभासनिष्ठत्वाभावात् एकाभासविश्रान्तः सम्भूय प्रमातॄणां व्यवहारो न स्यात्—इति अन्योन्यानुपरक्तं भूतग्रस्तप्रकृतिप्रायं जगत् आपद्येत। अनुमीयमानमपि च बोधान्तरम् अनुमातृसम्मतात् बोधात् यदि भिन्नम्, तद् अस्ति तावत् सम्भवः—यत् प्रमेयं बोधात् भिन्नम् अस्ति इति। सहोपलम्भनियमादेः अनैकान्तिकत्वात् नीलपीतादिनापि प्रमेयराशिना किम् अपकृतम्, येन अस्य स्वरूपविश्रान्तिः न सह्यते, तस्मात् प्रमात्रन्तराणामपि असिद्धिरेव, सिद्धौ वा सर्वप्रमात्रन्तर्गता आभासा एकैकत्र परत्र आभासवैचित्र्यहेतुं वासनोद्बोधवैचित्र्यं जनयेयुः—नियमे हेत्वन्तराभावात् इति, तथापि न नीलादिवैचित्र्यसिद्धिः। एवं वासनानां तदुद्बोधहेतूनां च विचित्राणाम् अनुपपत्तिरेव। ततश्च स्थितमेतत्, अभिन्नो बोधः तस्य आकस्मिकाभासभेदहेतुत्वानुपपत्तेः बाह्योऽर्थोऽनुमेयः सम्भाव्यते—इति यदि बाह्यार्थवादिना उच्यते, इति श्लोकद्वयार्थः। चेच्छब्दः श्लोकद्वयवाक्यार्थशङ्काद्योतकः ॥ ४-५ ॥

एवम् आशङ्क्यमानत्वेन परसम्भावना दृढा दर्शिता, अधुना तु एनां सम्भावनां शिथिलयितुं तावदाह—

स्यादेतदवभासेषु तेष्वेवावसिते सति।
व्यवहारे किमन्येन बाह्येनानुपपत्तिना ॥ ६ ॥

ग्रहण नहीं होगा—यह व्याप्ति ही नहीं बनेगी और यदि अन्य जीव भिन्न हैं तो अन्य प्रमाओं में रहनेवाले आभास का भेद ही रहेगा, [ 'ज्ञानादव्यतिरिक्तं च' ज्ञान से अभिन्न अर्थान्तर कैसे होगा, यह आचार्य धर्मकीर्ति का कथन है। ] इसी कारण एक वस्तु में न रहने के कारण एकाभास में रहकर मिले हुए प्रमाताओं का 'शिविका' पालकी के समान व्यवहार नहीं होगा। इस तरह आपस में न मिलने से भूत से ग्रस्त हो जाने के समान मूर्च्छित ही प्रायः जगत् का व्यवहार हो जायेगा। अनुमान किया जानेवाला दूसरा ज्ञान अनुमाता के सम्मत ज्ञान से यदि भिन्न है, तब तो वह प्रमेय ज्ञान से भिन्न है, यही सम्भव हो सकता है, कर्ता और कर्म का तादात्म्य नहीं होने से।

एक ही साथ ज्ञान और ज्ञेय का बोध हो सकता है, यह कोई निश्चित नहीं है या हो भी सकता है, नहीं भी हो सकता है, तो फिर नील-पीतादि समूह ने क्या अपकार किया है, जिस अपकार से प्रमेय के स्वरूप में विश्रान्ति होना तुम विज्ञानवादियों द्वारा नहीं सहन होता है, इससे अन्य प्रमाताओं की असिद्धि ही होगी, सिद्धि मानने पर भी प्रमाताओं के भीतर रहनेवाला आभास ज्ञान प्रत्येक स्थान में आभास की विचित्रता के हेतु वासना में उद्बोध वैचित्र्य पैदा कर देंगे; क्योंकि नियम में कोई हेतु नहीं है, ऐसा यत्न करने पर भी नीलादिकों की विचित्रता में विचित्रताओं की अनुपपत्ति ही होगी। इससे यह बात रह गयी, अभिन्न चिन्मात्र ज्ञान आकस्मिकाभास भेद का हेतु नहीं बन सकता है इसीलिए बाह्यार्थ अनुमेय है यह बात सम्भव है और यही बाह्यार्थवादी का कहना है दोनों श्लोकों का यही अर्थ है। 'चेत्' शब्द दोनों श्लोकों के वाक्यार्थ की शङ्का का द्योतक है ॥ ४-५ ॥

बाह्यार्थवादी द्वारा की हुई आशङ्का को दृढता पूर्वक बतलाया, किन्तु अब उस सम्भावना को शिथिल करने के लिए [ इसके बाद में ईश्वर अद्वैतवादी ] कहेंगे—

स्यादेतत्—इति पूर्वोक्तसम्भावनाभ्युपगमे यदा व्याख्यायते तदा किं तु इति वाक्यशेषेण तच्छैथिल्यविषयं सम्भावनान्तरं शेषश्लोकेन दर्श्यते इति व्याख्येयम्। यदि तु अध्याहारो न सह्यते तदा स्यादेतदिति इदमपि सम्भावनान्तरं स्यात्, यदनेन श्लोकेन उच्यते इति एकवाक्यतया योज्यम्, अनयापि कष्टकल्पनया बाह्यान् अर्थान् प्रसाधयता भवता तैः न किंचित् कर्तव्यम्, आभासैरेव तैः भवता अभ्युपगतैः व्यवहारसिद्धेः, न हि नित्यानुमेयेन कश्चित् व्यवहार इति किं बाह्येन, यत्र साधकं च नास्ति प्रमाणम्, बाधकं च प्रकाशात् भेदे अनुमेयतयापि प्रकाशनाभाव इति तावत् मुख्यम्। अभ्युच्चयबाधकास्तु अवयविनो वृत्त्यनुपपत्तिः, समवायासिद्धिः, कम्पाकम्पावरणानावरणरक्तारक्तदिग्भागभेदादिविरुद्धधर्मयोगः। अणुसंचयबाह्यवादेऽपि संचयस्य

यह सम्भव हो सकता है उन आभासों की समाप्ति होने पर जिसकी उपपत्ति न बैठती हो। ऐसे व्यवहार में अन्य बाह्य-पदार्थ से क्या क्षति आयेगी॥ ६॥

हो सकता है—पूर्वोक्त सम्भावना को मान लेने पर जब व्याख्यान करोगे तब तो इस वाक्य शेष से उसके शैथिल्य विषय की दूसरी सम्भावना को शेष श्लोक से बताते हैं—ऐसी व्याख्या करना ठीक है। यदि अध्याहार-समुच्चारण सह्य नहीं होता हो, तब तो यह भी दूसरी सम्भावना हो सकती है, जब कि इसी श्लोक से यह कहा जाता है—ऐसी एक वाक्यता जोड़नी चाहिए वाक्य भेद करना समुचित नही होता, [ अब दोनों के पक्षों में समान अर्थ हो गया। ]

इस कष्टदायी कल्पना से भी बाह्य-अर्थों की सिद्धि करोगे तभी भी उन बाह्य-अर्थों से प्रयोजन कुछ सिद्ध नहीं हो सकता है, क्योंकि जिन आभासों को आपने मान लिया है उन आभासों से ही व्यवहार की सिद्धि हो जायेगी, नित्य अनुमेय से कोई भी व्यवहार नहीं होगा, अप्रकाशमान होने के कारण बाह्यार्थ से क्या उपस्थित है। जहाँ पर साधक कोई प्रमाण नहीं है, और बाधक प्रमाण प्रयोजन है, क्योंकि प्रकाश से भेद होने पर अनुमेय से भी प्रकाशन का अभाव मुख्य रहता है। प्रकाश से भिन्न अप्रकाश होता है तो यही अधिक बाधक प्रमाण हो गया; इस इस विषय में जैसा भी सोचो, किन्तु जब प्रकाश से भिन्न मानोगे तब तो वह अप्रकाश हो ही जायेगा। इसका प्रकाशित न होना ही एकमात्र निष्कर्ष निकलता है अवयवों में अवयवी रहता है तथा अवयवी का अवयवों में नहीं रहना ही अभ्युच्चय बाधक कहलाता है, अर्थात् जब

---

१. पूर्व में तो प्रमाण के व्याज से प्रवृत्त हुए बाधक को कह दिया किन्तु अब अपने आप भी प्रमेय के अपने निरूपण में प्रवृत्त हुए प्रवृत्ति द्वारा प्रवृत्त प्रमेय के स्वरूप का उन्मूलन कर देना ही इसका अधिक बाधकत्व है।

२. हाथ चलता है इसमें केवल हाथ का ही चलन हो रहा है, सारे शरीर का नहीं होता है, तभी अवयव और अवयवी की युतसिद्धि हो जाती है। न्यायकन्दली में इसका प्रतिपादन किया हुआ है। हाथ के कम्पन होने पर हाथ के आश्रयभूत शरीर का कम्पन होता हुआ नहीं देखा जाता अथवा पैर का कम्पन होने पर तद्गत शरीर कम्पित होता नहीं देखा जाता, यही इसमें विरुद्धधर्मता मिलती है। उसी प्रकार एक अवयव के ढक जाने पर उसमें समवाय सम्बन्ध से रहनेवाले अवयवी का ग्रहण नहीं

**अन्यस्य अभावे अणव एव, ते च यदि संयुज्यन्ते निरन्तरतया तत् अवश्यं दिग्भागभेदः, देवनाक्षे षट्सु दिक्षु संचीयमानेषु षट्सु अणुषु मध्यमस्य परमाणोः यत्रैव धाम्नि एको लग्नः तत्रैव यदि अपरः तत् एकपरमाणुमात्रता। अथ अन्यत्र एकः अन्यत्र अपरः तत् अवश्यं भागभेदापत्तिः, इति भाग एव परमार्थसन्, तस्यापि एषैव सरणिः इति न किंचित् अवशिष्यते बाह्यं तत्त्वतः। न चैतत् वाच्यम्—मूर्तानाम् एकदेशत्वायोगात्, संयोगे भिन्नदेशत्वाव्यावृत्तेः तन्निष्ठं द्व्यणुकं नाम कार्यद्रव्यम् अणुपरिमाणम्, तेभ्यः त्रिभ्यो महत्कार्यम् इति। अवयविवादो हि अयम्, स च पूर्वमेव अपबाधितः। यच्च अव्याप्यवृत्तित्वं संयोगस्य उच्यते तन्निरंशे कथं संगच्छताम्। स्वाश्रये हि यदि असौ समवैति किम् अन्यत् अस्य अवशिष्टम् यत् न व्याप्नुयात् इति, अभ्युच्चयबाधकं च इदम्, इति न अत्र अस्माभिः भरः कृतः। विस्तरेण च प्रज्ञालङ्कारे दर्शितम् आचार्यशंकरनन्दनेन ॥ ६ ॥**

अवयवी वस्तु ही नहीं है तो अवयव किसमें रहेगा, यही वृत्ति की अनुपपत्ति है, समवाय की भी तो असिद्धि हो जाती है, क्योंकि अवयव अवयवी की सत्ता में ही समवाय की सत्ता रहती है, कम्पन-अकम्पन [ स्थैर्य ] आवरण-अनावरण, रक्त-अरक्तादि दिशाओं का भेद विरुद्ध धर्मों के संयोग मूर्त्त में बाध माना जाता है। अणु समुदायवाद में भी अणु समुदाय दूसरे परमाणु विलक्षण के अभाव में अणु ही रह जाते हैं और वे यदि निरन्तर संयुक्त होकर मिले रहते हैं तब तो अवश्य ही दिशाओं से उपलक्षित होनेवाले भाग का भेद हैं, ऐसी स्थिति में तो दिशाओं में भी भेद मानना पड़ेगा, षट् कोणवाली दिशाओं का ही भेद होता है, परमाणुओं का संयोग-वियोग भी बन सकता है इसी प्रकार वहाँ पर भी मान लो, इसीलिए यथार्थता में बाह्य कोई पदार्थ नहीं है और वह एक परमाणु मात्र का समर्थन भी नहीं कर सकता है मूर्तों के एक स्थान में रहना असम्भव होने से, संयोग हो जाने पर भिन्न देश में रहना नहीं बनेगा उसमें रहनेवाले दो परमाणु कार्य द्रव्य अणुपरिणाम ही रहेगा तीन परमाणु से महत् कार्य होता है। इस अवयविवाद का तो हमने पूर्व में ही खण्डन कर दिया है।

अव्याप्यवृत्ति संयोग अक्षपाद के मत की आशङ्का कर कहते हैं 'यच्चेति'—संयोग का अव्याप्यवृत्तित्व निरंश में कैसे हो सकेगा। यदि यह कहो कि अपने आश्रय में संयोग रहता है तो कौन वस्तु ऐसी है जहाँ पर संयोग व्याप्त नहीं होता है और यह बाधकों की भरमार है इसलिए हमने कोई जोर नहीं दिया है और इसका सविस्तार प्रतिपादन श्रीआचार्य शङ्करनन्दन ने प्रज्ञालङ्कार में किया भी है ॥ ६ ॥

---

होगा, आवरण हट जाने से तो ग्रहण होता है, इस प्रकार एक साथ भी ग्रहण होता है। अब कहो कि अवयवी का सम्बन्ध एक-एक अवयवी के साथ रहता है अथवा सम्पूर्णतया रहता है, एक देश से [ वृत्ति का ] रहना बन नहीं सकता है; अवयव से भिन्न एक देश का अभाव होने से, अथवा सम्पूर्णतया रहता है यह कहो तो भी दूसरे अवयव में वृत्ति नहीं रहती है; क्योंकि एक अवयव के संसर्गावच्छिन्नरूप में दूसरे अवयवों का स्थान न रहने से, उस स्वरूप से अतिरिक्त इसका दूसरा स्वरूप नहीं होने से भी यह बात है।

१. भरः—शब्द अतिशय प्रयत्न—अर्थ में है।

ननु बाधकं नाम प्रमाणसिद्धे वस्तुनि न किंचित् कर्तुं समर्थम्—तेनैव दृढेन प्रमाणेन बाधकाभिमतस्य बाधितस्य अप्रमाणत्वसम्पादनात्। दर्शितं च इह साधकं प्रमाणं कार्यहेतुः 'तत्तदाकस्मिकाभास' इति कारिकया इत्याशङ्क्य आह—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ।। ७ ।।

इह तावत् स्वप्न-स्मरण-मनोराज्य-संकल्पादिषु नीलाद्याभासवैचित्र्यं बाह्यसमर्पकहेतु-व्यतिरेकेणैव निर्भासते इति यद्यपि अस्ति सम्भवः, तथापि तदाभासवैचित्र्यम् अस्थैर्यात् सर्वप्रमातृसाधारण्यात् पूर्वानुभवसंस्कारजत्वसम्भावनात् अवस्तु इति शङ्क्येत। यत् पुनरिदं योगिनाम् इच्छामात्रेण पुरसेनादिवैचित्र्यनिर्माणं दृष्टम्, तत्र उपादानं प्रसिद्धमृत्काष्ठ-शुक्र-शोणितादिवैचित्र्यमयं न सम्भवत्येव, न हि एवं वक्तुं शक्यम्—सर्वगताः परमाणवो योगीच्छया झटिति संघटिताः कार्यम् आरप्स्यन्ते इति। यत एतत् लोकप्रसिद्धकारणभावानतिक्रमसिद्धये

अब प्रश्न करते हैं कि प्रमाण से सिद्ध वस्तु में बाधक प्रमाण कुछ नहीं कर सकता; क्योंकि उस दृढ प्रमाण से जिसको बाधक माने हुए हो उसमें अप्रमाणत्व सम्पादित हो जाता है और इसमें साधक प्रमाण तो कार्य का हेतु है इसे 'तत्तदाकस्मिकाभासः' इस कारिका में दिखा दिया है; इस प्रकार आशङ्का कर कहते हैं—

चिदात्मा देव ही अपने भीतर स्थित अर्थसमूह को इच्छाबल से बाहर की ओर प्रकाशित करते हैं जैसे योगी उपादान कारणादि के विना भी अर्थसमूह को प्रकाशित करते हैं ।। ७ ।।

स्वप्न, स्मरण, मनोराज्य, संकल्पादि में वाहरी कारणों के विना भी नीलादि पदार्थ चित्र-विचित्र रूपों से भासित होते हैं, यह सब संभव है, उसी प्रकार आभास की विचित्रता अस्थिर होने से सभी प्रमाताओं में असाध्य होने के कारण पूर्वकाल के संस्कार से ही उत्पन्न होती है इसलिए अवस्तु ही है। जो कि यह योगी लोगों की इच्छा मात्र से पुर, सेना, गढ़-किला आदि का विचित्र-चित्र निर्माण देखा जाता है उसमें प्रसिद्ध उपादन [ कार्य से अभिन्न रहता है जैसे घट के प्रति मिट्टी उपादान कारण होती है ] मिट्टी, काष्ठ, शुक्र, शोणितादि वैचित्र्यमय कारणों को तो संभावना भी नहीं देखी जाती है, ऐसा नहीं कह सकते हो—योगी की इच्छामात्र से सब जगह रहनेवाले व्यापक परमाणु आपस में एक दूसरे से मिलकर शीघ्र ही कार्य संपादन कर देते हैं। जब कि यह लोक प्रसिद्ध कार्य-कारणभाव अनतिक्रम सिद्धि के लिए निरूपण करते हैं। यह प्रसिद्ध

---

१. जिन लोगों ने अपना परम संविद्रूप स्वातन्त्र्य नहीं जाना है उन्हें सदैव संशय-विपर्यय बने ही रहते हैं। जिन्होंने संविद्रूप स्वातन्त्र्य प्राप्त कर लिया है उन्हें तो कभी-कभी दूसरे कारण को खोजने के लिए अन्वेषण नहीं करना पड़ता है। इस विषय में "भट्टदिवाकरवत्स" ने कहा है 'न दृश्यते त्वत्प्रतिभास-शक्तेः स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत्। तद्दृष्टसामर्थ्यतया सदैषा विश्वप्रपञ्चप्रथनैकहेतुः ।।

हे प्रभो ! आपकी प्रतिभा-शक्ति से भिन्न कोई निमित्त अर्थवैचित्र्य के लिए स्वप्न काल में भी नहीं दिखते हैं। विश्वप्रपञ्च का विस्तार करने में एक मात्र कारण संविद्रूप का सामर्थ्य ही है।

२. घटरूप कार्य से अभिन्न रहनेवाला उपादान कारण कहलाता है जैसे कि घट के प्रति मिट्टी।

निरूप्यते। न च एतत् प्रसिद्धम्—परमाणुभ्य एव स्थूलं घटादि जायते इति, किं तु कपालादिव्यवधानेन, तत्रापि नियतसहकारिसमवलम्बनम् करचरणादिव्यापारो विशिष्टदेशकालधर्माधिपत्ययोगः शिक्षाभ्यासप्रकर्ष इति, इयति च आश्रीयमाणे योगी कुम्भं निर्मिमाणः कुम्भकारप्रसिद्धसमस्तसामग्रीसमर्जनपुरःसरं घटं घटयन् कुम्भकार एव स्यात्, तस्मात् प्रसिद्धकारणोल्लङ्घने किम् असंचेत्यमानपरमाण्वाद्युपादानकारणान्तरचिन्तया इति। तत्र योगिसंविद एव सा तादृशी शक्तिः—यत् आभासवैचित्र्यरूपम् अर्थजातं प्रकाशयति इति। तत् अस्ति सम्भवः—यत् संवित् एव अभ्युपगतस्वातन्त्र्या अप्रतीघातलक्षणात् इच्छाविशेषवशात् संविदोऽनधिकात्मताया अनपायात् अन्तःस्थितमेव सत् भावजातम् इदमित्येवं प्राणबुद्धिदेहादेः वितीर्णकियन्मात्रसंविद्रूपात् बाह्यत्वेन आभासयति इति, तत् इह विश्वरूपाभासवैचित्र्ये चिदात्मन एव स्वातन्त्र्यं किं न अभ्युपगम्यते स्वसंवेदनसिद्धम्, किमिति हेत्वन्तरपर्येषणाप्रयासेन खिद्यते। एवकारेण इदमाह—सर्वेण तावत् वादिना विषयव्यवस्थापनं संविद्रूपम् अनपह्नवनीयम् आदिसिद्धं हि तत् इति उक्तम्। तस्य च स्वातन्त्र्यमेव देवशब्दनिर्दिष्टं चिद्रूपत्वम्, इति किम् अपरकारणान्वेषणव्यसनितया। हि यस्मात् एवं प्रकाशयति देव इति सम्भाव्यते, तस्मात् किं बाह्येन अनुपपत्तिना, इति पूर्वेण सम्बन्धः ॥ ७ ॥

नहीं है कि परमाणुओं से ही घटादि की उत्पत्ति होती हो। किन्तु दो कपाल आपस में जब मिलते हैं तभी घट तैयार होता है, उसमें भी नियत सहकारी कारणों [घटरूप कार्य से भिन्न देश में रहनेवाले जैसे चक्र, दण्ड, चीवरादि सहकारी कारण कहलाते हैं] का अवलम्बन करना, हाथ, पैर आदि के व्यापार विशिष्ट देश-काल धर्म का योग होना अपेक्षित है। घट निर्माण के लिए घट सम्बन्धी शिक्षा, ज्ञान एवं अभ्यास का होना आवश्यक होता है। इतनी वस्तु-सामग्री के रहने पर योगी घट बनावे तो कुम्भकार ही सिद्ध हो जायेगा, इसलिए प्रसिद्ध कारण के उल्लंघन करने में जो संभव नहीं है उस परमाणु से भिन्न कारण की चिन्ता करना व्यर्थ है। उसमें तो योगी के ज्ञान की ही वह वैसी शक्ति है—जो आभास वैचित्र्यरूप से अर्थसमूह को प्रकाशित करती है। इसलिए संभव हो सकता है जो कि संवित् ही अपनी मिली हुई स्वतंत्रता से, निर्बाधरूप से, इच्छा विशेष से, अधिक न होनेवाली संवित् का नाश न होने से, भीतर रहनेवाले पदार्थ समूह को ही बाहर में प्राण, वुद्धि, देहादि रूप से, कुछ फैली हुई संविद्रूप से, बाहर में आभासित करती है, इसलिए वाहर के भावपदार्थों की विचित्र-चित्ररूपता में चिदात्मा का ही स्वातन्त्र्य क्यों नहीं मान लेते हो जोकि वह स्वयं संवेदन ज्ञान से सिद्ध है, क्यों दूसरे-दूसरे हेतु के खोजने के परिश्रम से खिन्न होते हो। 'एवकार' शब्द से यह कहते हैं कि सब वादी से विषय की व्यवस्था संविद्रूप मानो जाती है जो कि आदि सिद्ध है उसे हमने पहले ही कह दिया है और उसके स्वातन्त्र्य को 'देव' शब्द से व्यक्त किया है, क्यों दूसरे कारण को खोजने में व्यसनी वनते हो, 'हि' जिससे ऐसा यह देव प्रकाशित होता है, ऐसी संभावना करना संभव हो सकता है। इसलिए बाह्य कारण की क्या आवश्यकता है जवकि वन नहीं सकता ॥ ७ ॥

---

१. 'इति' शब्द वाक्य की समाप्ति अर्थ में दिया गया है।

२. घटरूप कार्य से भिन्न देश में रहनेवाले का नाम सहकारी कारण है। जैसे घट के प्रति दण्ड-चक्रादि।

ननु एवम् उभयथापि सम्भावनानुमानम् उन्मिषति, तत्र किं मुकुरप्रतिबिम्बितघटादि-दृष्टान्तेन ज्ञानप्रतिबिम्बिताभासवैचित्र्ये विज्ञानदर्पणातिरिक्तं तत एव बाह्याभिमतं हेतुं कल्पयेम ? किं वा योगिदृष्टान्तेन संवित्स्वातन्त्र्यमेव हेतुभावेन ब्रूयाम ? तदिदं सांशयिकं वर्तते इति आशङ्क्य बाह्यार्थानुमानसम्भावनां सूत्रद्वयेन अपाकर्तुमाह—

अनुमानमनाभातपूर्वे नैवेष्टमिन्द्रियम् ।
आभातमेव बीजादेराभासाद्धेतुवस्तुनः ॥ ८ ॥
आभासः पुनराभासाद्बाह्यस्यासीत्कथंचन ।
अर्थस्य नैव तेनास्य सिद्धिर्नाप्यनुमानतः ॥ ९ ॥

न केवलम् अनन्तरश्लोकनिर्दिष्टाभिः युक्तिभिः प्रत्यक्षेण बाह्योऽर्थो न आभासते, इयदेव हि प्रत्यक्षं—यत् नीलं भाति इति स्वप्रकाशसंविद्रूपं, नाधिकं किंचित् इति, यावत् अनुमानेनापि न अस्य बाह्यस्य सिद्धिः इति अपिशब्दः। तत्र अनुमानम् अत्र नैव प्रवर्तितुम् उत्सहते। प्रवृत्त-मपि न प्रकृतसिद्धम् आदध्यात् इति अनेन सूत्रद्वयेन दर्श्यते। तत्र अनुमानं—विकल्पः, सर्वश्च अयं विकल्पोऽनुभवमूल इति प्रसिद्धम्। तेन यत् सर्वथा अनाभातपूर्वम्—अननुभूतचरं तत्र

अब शंका करते हैं कि आगे कही जानेवाली दोनों तरह की संभावना से अनुमान निकलता है, [ सर्वथा ही दूसरे में रहनेवाले अनुमान को सिद्ध करना होगा और उस संभावनारूप अनुमान से तो दोनों समान ही विकसित होंगे अतः इसमें फिर किसका त्याग किया जाय और किसका ग्रहण किया जाय। ] घटादि का दर्पण में पड़े हुए प्रतिबिम्ब के समान अथवा ज्ञान में जो प्रतिबिम्बता का आभास है उसकी विचित्रता में विज्ञान दर्पण से भिन्न और उसीसे बाहर माने हुए [ अपने सदृश दूसरे भाव-पदार्थ का संक्रमण होना ] हेतु की क्या कल्पना करोगे ? अथवा योगी के दृष्टान्त से ज्ञान की ही स्वतन्त्रता को हेतुभाव से क्या हम कहेंगे ? यही बात सन्देह में पड़ी हुई है ऐसी आशंका कर बाह्यार्थ के अनुमान की सम्भावना को दूर करने के लिए दो श्लोकों से कहते हैं—

पूर्व में जिसका आभास नहीं हुआ है उसका अनुमान नहीं होता, हेतु देने योग्य जो बीजादि वस्तु है उस आभास से इन्द्रियाँ आभासित ही होती हैं ॥ ८ ॥

बाहर के आभास से किसी भी तरह उसका आभास था इसलिए बाहर का अनुमान नहीं हो सकता है, हेतु से अर्थ की सिद्धि नहीं हो सकती और अनुमान से भी नहीं हो सकती ॥ ९ ॥

इसके पूर्व में दिखाये गये श्लोक की युक्तियों से भी नहीं अपितु प्रत्यक्षरूप से भी बाह्य अर्थ नहीं आभासित होता है, इतना ही प्रत्यक्ष है जो नील आभासित होता है—इसे पूर्व में ही कह दिया है, अब कुछ भी अधिक कहना शेष नहीं रह जाता है। 'अपि' शब्द का अर्थ है कि अनुमान से भी इसकी सिद्धि नहीं होगी। अनुमान की भी इसमें प्रवृत्ति नहीं होती है। प्रवृत्त हो भी जाय तो भी बाह्यार्थ की सिद्धि नहीं कर सकता, यह बात दोनों सूत्रों से बतलायी जाती है। अनुमान-विकल्प करना, और समस्त विकल्प अनुभव मूलक ही रहता है यह सर्वजन विदित ही

अनुमानम् अनुमितिव्यापारो विकल्पात्मा नैव केनचित् वादिना इष्यते। ननु भवतु प्रत्यक्षतो दृष्टेऽनुमाने संकथा इयम्, सामान्यतो दृष्टे तु किं वक्ष्यसि यथा अर्थोपलब्ध्या इन्द्रियानुमाने ?, उच्यते—तत्रापि विकल्पेन यथा सोऽर्थः स्पृश्यते तथा अनुमेय इति स्थितः। विकल्पश्च न इन्द्रियादिकम् अर्थं केनचित् संनिवेशविशेषात्मना स्पृशति, अपि तु किंचिदुपलब्धेः कारणम् इति अमुना स्वभावेन, स च स्वभावः कारणतालक्षणः प्रत्यक्षगृहीत एव। तथा च बीजात् अङ्कुरः तन्तुभ्यः पट इत्यादौ कार्यकारणभावः प्रत्यक्षानुपलम्भबलेन तावत् निश्चेयः। तत्र च प्रत्यक्षं प्रत्याभासं प्रामाण्यं भजते, विमर्शलक्षणस्य प्रमितिव्यापारस्य एकैकशब्दवाच्येऽर्थे विश्रान्तेः, तदनुसारित्वाच्च प्रमाणस्य इति वक्ष्यते। 'एकाभिधानविषये मितिर्वस्तुन्यबाधिता।' इति। आभासमात्रं च सामान्यम् इति निर्णेष्यते। अनुपलम्भोऽपि अन्योपलम्भरूप आभासमात्रविश्रान्त एव—इति कारणाभासो विशेषशून्यः परिगृहीत एव बीजात् अङ्कुर इति प्रतीतौ यत् यस्य नियमम् अनुविधत्ते अव्यतिरिक्तम् तत् तस्य कार्यम्, इति प्रतिघटं मृत्तिकादिरूपस्य हेतुतद्धन्मात्रस्य आभासात्, साभासात् बाह्यः पुनरनाभासरूपः, स च आभासते इति विप्रतिषिद्धम्। अनाभाते च नास्ति विकल्परूपस्य अनुमानस्य व्यापारः। ग्रामगृहादेस्तु यत् बाह्यं तत् अग्रामादिरूपं न उच्यते—प्रत्येकं वाटानूपकुड्यतुलादेः बाह्यत्वप्रसङ्गात् अपि तु तत्संनिकृष्टम्, तस्मात् ग्रामबाह्यम् आभासबाह्यम् इति च शब्दसाम्यमात्रम् एतत् न वस्तुसाम्यम्। एवं ये

है। इसलिए जिसका पूर्व में आभास नहीं हुआ है उसमें अनुमान जो अनुमिति का व्यापार है उसका विकल्परूप किसी भी वादी को इष्ट नहीं है, भले ही प्रत्यक्ष से दृष्ट अनुमान के रहने पर हो, किन्तु सामान्यतो दृष्ट में क्या कहोगे, जैसा कि अर्थ उपलब्धि से इन्द्रियों के अनुमान में ? उत्तर देते हैं—सविकल्प और निर्विकल्प का प्रत्यक्ष में भी विकल्प से जैसा अर्थ आभासित होता है वैसा ही अनुमेय भी होता है और विकल्प किसी संनिवेश विशेष से इन्द्रियादि पदार्थ को नहीं स्पर्श [ प्रकाशित ] करता है, अपि तु किंचित् उपलब्धि के कारण इन्द्रियाँ हैं इसी कारण से, और वह स्वभाव प्रत्यक्ष से ही गृहीत होता है। वैसा ही बीज से अंकुर और तन्तु से पट इत्यादि में कार्य-कारणभाव प्रत्यक्ष और अनुपलम्भ से निश्चय होता है। और प्रत्यक्ष तो सभी आभास में प्रमाण होता है, विमर्शरूप जो प्रमा का व्यापार है उसके अभिधेय अर्थ में भासित होता है, और तदनुसार प्रमाण कहेंगे। 'एकाभिधानविषये मितिर्वस्तुन्यबाधिता' और आभास मात्र को सामान्य रूप से निर्णय करेंगे। अनुपलम्भ को भी अन्य उपलम्भरूप आभासमात्र में ही विश्रान्त रहेगा, जिसके रहने पर जो नियम से होता है वही उसका कार्य माना जाता है जैसा कि मिट्टी से घट और बीज से अंकुररूप, प्रत्येक घट में मिट्टी का आभास रहता है उसी का हेतुरूप से आभास होता है, जब आभास सहित होने के कारण बाह्य अनाभास रूप है और भासित होता है यह तो परस्पर विरुद्ध है। जब अनाभास होनेसे विकल्परूप अनुमान का व्यापार नहीं बन सकता। ग्राम, गृहादि से जो वस्तु बाह्य है उसे अग्राम, गृहादिरूप नहीं कहा जाता है यदि बाह्यरूप माना जाय, तो फिर प्रत्येक देश में रहनेवाले भीत्तिका अर्थात् दीवाल, तुलादि को भी बाह्य रखना होगा। अपितु उसके भीतर की ही बात कही जाती है ग्राम के बाहर होने पर भी ग्राम की ही ये वस्तुएँ हैं और यह व्यवहार देखा भी जाता है, इसलिए ग्राम से बाह्य और आभास बाह्य मात्र एक कथन ही है वस्तु साम्य नहीं है अर्थात् इसमें दूसरा कोई अभिप्राय नहीं है। एवं विकल्प में वस्तु

विकल्पे वस्तु न आभाति इति मन्यन्ते तेषामपि तावत् अनुमानविकल्पो न बाह्ये उपपन्नः। अस्माभिस्तु उपपादितम्—अध्यवसायस्यापि आभासमानविषयत्वम् 'भ्रान्तित्वे चावसायस्य' इति सूत्रे। तेन अनुमानविकल्पात्मनापि प्रकाशेन यदि अनाविष्टो नीलादिः अर्थः तत् न अनुमित एव स्यात्। अथ आविष्ट एव, तर्हि 'प्रागिवार्थोऽप्रकाशः स्यात्' इति न्यायेन प्रकाशमात्रस्वभाव एव, न बाह्यः। तेन बाह्ये साध्ये यत् किंचित् प्रमाणम् आनीयते, तदबाह्यतामेव प्रत्युत प्रसाधयति इति विरुद्धमेव, अत एव आह 'कथंचन' इति, केनापि प्रकारेण प्रत्यक्षात्मना अनुमेयात्मना वा आभासनम् आभासो बाह्यस्य अनाभासस्य न कदाचित् अभूत् इति, तस्मात् सिद्धम् 'चिदात्मैव हि देव' इति ॥ ८-९ ॥

ननु अन्तःस्थितं बहिः प्रकाशयेदित्युक्तं तत् अन्तस्थितत्वम् उपपादनीयम् इति आशङ्क्य आह—

स्वामिनश्चात्मसंस्थस्य[2] भावजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते[3] ॥ १० ॥

आभासित नहीं होती है ऐसा जो बौद्ध मानते हैं, उनका भी अनुमान विकल्प बाह्य में नहीं हो सकता। किन्तु हमने तो इसका 'भ्रान्तित्वे चावसायस्य' सूत्र में प्रतिपादन कर दिया है [ 'भ्रातित्वे' यह उपलक्षण है, इसलिए 'भासयेच्च स्वकालेऽर्थात्' इत्यादि से कहा है और 'केवलं भिन्नसंवेद्यः' इत्यादि में कहेंगे ] इसलिए अनुमान विकल्परूप प्रकाश से यदि नीलादि अर्थ आविष्ट नहीं है तो उसका अनुमान नहीं बनेगा; यदि कहो कि आविष्ट है तो 'प्रागिवार्थोऽप्रकाशः स्यात्' इस युक्ति से प्रकाशमात्र स्वभाव ही होगा, बाह्य नहीं है। बाह्य साध्य में जो कुछ प्रमाण ले आयँगे वह तो अबाह्यत्व को ही सिद्ध करेगा इसमें तो आपको विरुद्ध ही दिखायी पड़ेगा, इसलिए कहते हैं 'कथंचन' किसी प्रकार भी प्रत्यक्षरूप से, अनुमेयरूप से आभासन वा आभास का अनाभास कभी भी नहीं हुआ, इसलिए 'चिदात्मैव हि देवः' चिदात्मा ही देव है—यह सिद्ध हुआ ॥ ८–९ ॥

अब इस पर प्रश्न करते हैं कि अन्तःकरण में अवस्थित रहे हुए का ही बाहर में प्रकाश होता है ऐसा जो कहा गया है उसे ही सिद्ध करना है [ यदि चिदात्मा देव में रहनेवाली पदार्थ[1] राशि है तो फिर क्यों नहीं भासित होती है इसे युक्ति द्वारा साधते हैं ] इस तरह आशंका कर कहते हैं—

चिदात्मा देव में रहनेवाले ही अर्थ-समूह भासित होते हैं। इसलिए उनमें अर्थराशि तो रहती है किन्तु इच्छा के बिना परामर्श नहीं हो सकता है ॥ १० ॥

---

१. सवेदन ज्ञान के भीतर बाह्य अर्थ का प्रतिबिम्ब रहता है प्रतिबिम्बरूप आभास का उत्थापक है अर्थात् अन्तःकरण में ज्ञान का आभास तभी रहता है जब बाहर में पदार्थ विद्यमान रहता है इसमें कोई प्रमाण नहीं है इससे सिद्ध होता है कि चिदात्मा देव ही सब कुछ है बाह्यरूप कुछ भी नहीं है।

२. बाहर में अवभासित होनेवाले पदार्थ समूह का अवभासन केवल इदन्तारूप से ही होना यह सकल लोक में प्रसिद्ध नहीं है जब कि भगवान् महेश्वर में अन्तःस्थितरूप से भी अवभासन रहता ही है, और बाहर में इदन्ता का उल्लास न होने कारण अहन्तारूप से अन्तर में नहीं है यह भी बात नहीं है अपितु अन्तर में सदैव आभास बना ही रहता है।

३. इसका यह आशय है कि चिदात्मा ईश्वर का जैसे अभेद में आभास होता है वैसे ही समस्त अर्थों में

बहीरूपतयापि आभासने अन्तारूपता न त्रुट्यति 'प्रमात्रैकात्म्यमान्तर्यम्' इति हि वक्ष्यते, तच्च सदैव प्रकाशस्य प्रमातृत्वात्, तदात्मतया च विना प्रकाशमानस्य अवस्तुत्वात्, किं तु तत्र अहम् इति उचिते परामर्शे योऽयम् इदन्तापरामर्शः सैव बाह्यता, तच्च इह अन्तःस्थितत्वम् अहमित्येतावता चित्समुचितेनैव वपुषा परामर्शनम्, तच्च इह नीलादीनामस्त्येव, न तु नास्तिइति, यदि हि न स्यात् कुम्भकृतो 'घटं करवाणि' इति य उत्तरक्रियापेक्षया इच्छाशब्दवाच्यः परामर्शः एषणीयात्मना, स परामृश्येन अनियन्त्रितः चेत् ततः पटेच्छापि सा न कस्मात्इति संकीर्येरन् व्यवहाराः। अथ तत्रापि च एषणीयः तदानीमेव निर्मितः सन् तथा जातः, तर्हि तन्निर्माणं चिदात्मनि विनेच्छया नोपपन्नम् इति। 'तिष्ठासोरेवमिच्छैव हेतुता।' इत्यत्र वर्णयिष्यते। ततश्च इच्छान्तरमपि विषयनियन्त्रितं ? न वा ? इति विकल्पेऽनवस्था। विषयनियन्त्रितं चेत् स्यात् आत्मतैव जाता, न चेत् घटे पटेच्छा स्यात्। अथ तत्रापि तदानीमेव इति कृत्वा अनवस्था, तस्मात् सर्वोऽयं भावराशिः चिदात्मनि अहम् इत्येव वपुषा सततावभासुरवपुः ऐश्वर्यरूपाच्च स्वातन्त्र्यलक्षणात् स्वामिभावात् विचित्रेण वपुषा क्रमाक्रमाबिना संवित् एनं बहिष्करोति प्रमातृभेदप्रथन-

पदार्थराशि बाहर रूप से प्रकाशित होने पर भी उसका भीतर रहना बना रहता है खण्डित नहीं होता है 'प्रमात्रैकात्म्यमान्तर्यम्' क्योंकि ऐसा आगे कहा जायेगा और वह भीतरी प्रकाश सदेव बाहर में भी प्रकाशित होता रहता है प्रमातारूप होने के कारण और उसके बिना प्रकाशमान न होने से अवस्तु हो जायेगी किन्तु 'अहं' इस समुचित परामर्श में जो यह इदन्ता परामर्श है उसी का नाम बाह्यरूपता है और यहाँ पर भीतर रहनेवाले 'अहम्' इस शब्द से समुचितरूप में परामर्श करना इतना ही माना जाता है वह नीलादि भाव-पदार्थों में रहता ही है, नहीं रहता है, ऐसी बात नहीं है, यदि वह न रहे तो कुम्भकार 'घटं करवाणि' द्वारा घट का निर्माण होना, मैं आज घट बनाउँगा ऐसी आगे की क्रिया को लेकर इच्छा शब्द से कहे जानेवाला परामृश्यमान जो घट है उससे नियन्त्रित नहीं होगा, तब तो अन्तर में स्थित परामर्श को पट इच्छा क्यों न मानी जाय ? इस प्रकार सारा व्यवहार संकीर्ण होकर आपस में मिल जायेगा। अब कहो कि उस समय जो इच्छा का विषय है वह उसी समय उत्पन्न होगा, तब तो चिदात्मा में बिना इच्छा से कोई वस्तु-पदार्थ का निर्माण ही सिद्ध नहीं हो सकेगा 'तिष्ठासोरेवमिच्छैव हेतुता।' इसका वर्णन किया जायेगा और इससे दूसरी इच्छा भी परामृश्यविषय से नियन्त्रित रहेगी ? या नहीं रहेगी ? ऐसा विकल्प करते करते अनवस्था हो जायेगी। यदि विषय से सम्बद्धता रखती है तो आत्मस्वरूप ही हो गया, यदि घट में पट इच्छा न हो तो दूसरी इच्छा में भी इसी ढङ्ग से अनवस्था हो जायेगी, इसलिए समस्त पदार्थराशि अहंरूप चिदात्मा में निरन्तर भासित होते रहना उसका स्वरूप नहीं है और ऐश्वर्यरूप से, स्वातन्त्र्यरूप से, स्वामी होने से, चित्र विचित्ररूप कार्य-कारणभाव के क्रम से अथवा अक्रम से संवित् ज्ञान ही इस पदार्थ राशि को बाहर की ओर प्रकाशित करता है, प्रमातृभेद के विस्तार के साथ, उसमें भी कहीं पर आभास में प्रमातृवर्ग को एक कर देता है। जैसे नृत्य करनेवाली नर्तकी अपनी भावभङ्गी से

---

भी अभेद पूर्वक ही आभास होता है—अर्थात् अपने स्वरूप में पदार्थों का भी अभिन्नरूप से ही प्रकाश है, नहीं तो भासमान होनेवाले अर्थरूपी विषय प्रमाता का इच्छारूप विमर्श नहीं हो सकता है।

पूर्वकम्, तत्रापि क्वचित् आभासे प्रमातॄन् एकीकरोति नितम्बिनीनृत्त इव प्रेक्षकान्। तावति हि तेषाम् आभासे ऐक्यम्। शरीरप्राणबुद्धिसुखाद्याभासांशेषु तु भेदस्य अविगलनात् न सर्वथा ऐक्यम्। अत एव प्रतिक्षणं प्रमातृसंयोजनावियोजनावैचित्र्येण परमेश्वरो विश्वं सृष्टिसंहारादिना प्रपञ्चयति। तदुक्तमाचार्येण—'सदा सृष्टिविनोदाय सदा स्थितिसुखासिने। सदा त्रिभुवनाहार-तृप्ताय भवते नमः ॥' इत्यादि। श्रीभट्टनारायणेनापि—'मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः। कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥' इति। तस्मात् स्थितम् अन्तःस्थितं भावजातं—तेन विना तद्विषयस्य परामर्शस्य अयोगात् इति ॥ १० ॥

प्रेक्षकवर्ग की दृष्टि को अपनी ओर एक सी कर देती है। उतने अंश में ही उनके आभास में ऐक्य रहता है। शरीर, प्राण, बुद्धि और सुखादि का आभास के भागों में भेद न टूटने से सर्वथा ऐक्य नहीं होता है। इसलिए परमेश्वर प्रतिक्षण प्रतिपल प्रमाताओं के संयोजन [ मलप्रेक्षादि में ] वियोजन [ अन्यत्र ] की विचित्रता से सारे विश्वको सृष्टि, स्थिति, संहार-प्रलयादि द्वारा प्रपञ्चित किया करते हैं। आचार्यपाद ने भी कहा है—'सदा-सर्वदा विनोदरूपी सृष्टिकरनेवाले सदा सुखार्थ स्थितिरखनेवाले उसे अपने में लय करके परितृप्त हो जानेवाले ऐसे आपको नमस्कार हो।' इस प्रकार श्री भट्टनारायण ने भी कहा है—'सैकड़ों कल्पनाओं से तीनों लोकों की बारम्बार कल्पना करते हुए भी विश्रान्ति लेनेवाले कोई एक निर्विकल्प अज की जय हो।' इसलिए मानना पड़ेगा कि चिदात्मा के भीतर पदार्थ समूह रहता है उनकी इच्छा के बिना परामर्श नहीं हो सकता ॥ १० ॥

---

१. आशय यह है कि सर्वशक्तिसम्पन्न शिवत्व का विभाग अवस्था में भी वैसा ही स्वरूप रहता है जैसा कि नर्तकी का नृत्याभास प्रेक्षकगण की दृष्टि को एक ही साथ अपने अभिमुख एकत्रित कर लेने में होता है।

श्रीसोमानन्दपादने शिवदृष्टिशास्त्र में सर्वत्र शक्ति पञ्चक स्वभाव का उपसंहार करते हुए कहा है—

'एवं न जातुचित्तस्य वियोगस्त्रितयात्मना।
शक्त्या निर्वृतचित्तस्य तदभागविभागयोः ॥'
तथा च स्फुटमेव तेनैव प्रत्यभिज्ञापितम्, यथा।
'यदा तु तस्य चिद्धर्मप्रभावामोदजृम्भया ॥
विचित्ररचना नानाकार्यसृष्टिप्रवर्तने।
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा तुटिः ॥'
इत्यस्य प्रस्तावे
सा च दृश्या हृदुद्देशे कार्यस्मरणकालतः।
प्रहर्षवेगसमये दरसन्दर्शनक्षणे ॥
अनालोचनतो दृष्टे विसर्गप्रसरास्पदे।
विसर्गोक्ति प्रसङ्गे च वाचने धावने तथा ॥
एतेष्वेवप्रसङ्गेषु सर्वशक्तिविलोलता। इति।

सत्या वागैश्वरी मता। तयेति यत्र हि यदा यत्तद्ग्राह्यमशंकितैः॥' इति श्लोके 'यत्र यदा' इत्युक्तम्, तेन—प्रत्यक्षागमौ बाधकौ अनुमानस्य, इति तत्रभवद्भर्तृहरि-न्यायभाष्यकृत्प्रभृतयः, तस्मात् प्रमाणलक्षणे ज्ञाते सर्वं प्रमाणस्वरूपं ज्ञातं भवति किं विशेषलक्षणैः, यस्तु अविसंवादकत्वं तस्य लक्षणम् आह तेनापि 'प्रापकत्वं प्रवर्तकत्वं प्रवृत्तियोग्यशक्यप्राप्तिकवस्तूपदर्शकत्वं' प्रमाण-लक्षणं ब्रुवता न किंचित् प्रमाणाभिमतबोधविश्रान्तं स्वरूपम्, तत् चेत् अनेन लक्षणेन निर्वाह्यते तत् निर्व्यूढं भवति, अन्यथा मुखभङ्गमूर्धकम्पाङ्गुलीमोटनादिमात्रतत्त्वं तत्, इति अलं विस्तरेण ॥१-२॥

ननु च 'एकाभिधानविषये मितिः' इति यत् उक्तं, तत्र—एकमभिधानं बाह्ये स्वलक्षण एव प्रवर्तते यदि, तत्कथम् उक्तं—प्रत्यभासं प्रमाणम्, आभासमिश्रीकरणाभासस्तु स्वलक्षणम्? इत्याशङ्कां शमयन् प्रमाणस्य यत् प्रमेयं तत् परमार्थतो निरूपयितुम् आह—

यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधिते ॥ ३ ॥

इसीलिए श्लोक में 'यत्र यदा' ऐसा कहा गया है, इससे सिद्ध होता है कि प्रत्यक्ष और आगम अनुमान के बाधक होते हैं, इसको भर्तृहरि एवं न्यायभाष्यकर्ता आदि सभी लोगों ने माना है; प्रमाण के लक्षण को जान लेने पर प्रमाण के सभी स्वरूप ज्ञात हो जाते हैं, विशेष लक्षण करने का कोई आवश्यकता नहीं; जो लोग यह कहते हैं कि व्यर्थ न होना यही प्रमाण का लक्षण होता है, उसकी भी प्राप्ति करना ही प्रवर्तकता मानना पड़ेगा, प्रवृत्ति प्राप्ति योग्य शक्य वस्तु को दिखा देना ही प्रमाण का लक्षण है—ऐसा कहनेवाले भी तो प्रमाण का कोई अभिमत निष्कर्ष नहीं बताते हैं। इससे सिद्ध होता है कि जो इस लक्षण से प्राप्त होता है वही उत्तम लक्षण माना जाता है, नहीं तो मुख घुमा देना, मस्तक हिला देना और अंगुली के द्वारा चुटकी बजा करके बात को उड़ा देना इत्यादि दूसरी चीज है, इस पर अधिक कहना व्यर्थ है ॥ १–२ ॥

अब इस पर शङ्का करते हैं कि 'एकाभिधानविषये मितिः' इस प्रकार अविसंवादि विज्ञान को प्रमाण सौगतादि मानते हैं. इस वाक्य में एक अभिधान बाह्य स्वलक्षण में प्रवृत्त होता है, यदि ऐसा ही तात्पर्य है—तो प्रत्याभास ही प्रमाण सिद्ध होगा वह कैसे कहा गया है? आभास का मिश्रीकरण तो प्रत्याभास होगा? इस शङ्का को दबाते हुए प्रमाण का जो प्रमेय है उसके ठीक-ठीक निरूपणार्थ अब कहा जा रहा है—

आभास भी एक ही अर्थ में अनुसन्धान से विचार करने पर रुचि, अर्थिता एवं व्युत्पत्ति के अनुसार भिन्न-भिन्न हो जाते हैं ॥ ३ ॥

---

यद्यपि आगमशास्त्र का निर्माण मोक्ष के लिए ही हुआ है तथापि लोकाचार के विरुद्ध आचरण करनेवाले के लिए निषेध का भी प्रतिपादन किया गया है। देश-काल की परिस्थिति को लेकर इस का निरोध करना चाहे तो भी निरोध नहीं किया जा सकता है। इस का उल्लेख किया गया है। श्री भर्तृहरि ने वाक्यदीय में उल्लेख किया है—

प्रसिद्ध आगमो लोके युक्तिमानथ नेतरः। विद्यायामप्यविद्यायां प्रमाणमविगानतः॥

लोक में प्रसिद्ध आगम युक्तिवाला है अथवा न भी हो; विद्या और अविद्या में भी अनिन्दित होकर ही प्रमाण रहता है।

यद्यपि घट इति बहिः परिदृष्ट एकोऽर्थः तथापि तावानेव असौ न, अपि तु पृथक् निर्भज्यमानतामपि सहते, तथाहि—स्वतन्त्रं वा विवेचनम् अर्थित्वानुसारेण वा पूर्वप्रसिद्ध्युपजीवनेन वा, तत्र त्रिधापि विवेचने क्रियमाणे पृथगेव भान्ति आभासाः, ननु एवं चेत् कथम् एकं स्वलक्षणम्? उच्यते—तेषां पृथक् भासमानानामपि आभासानां यो विमर्शः अनुप्राणितभूतः स कदाचित् प्रत्याभासमेव विश्राम्यति, तदा परापरसामान्यव्यवहारः, कदाचित् पुनः गुणप्रधानतापादनेन 'अत्र इदम् इत्थम्' इति व्यामिश्रणाप्राणो विमर्शः तदा तदेकं स्वलक्षणं अपिः भिन्नक्रमः, अनुसन्धानेन मिश्रताविमर्शेन साधितो य एकोऽर्थः स्वलक्षणात्मा तत्र एकस्मिन्नपि सति रुचि—स्वातन्त्र्यम्, अर्थित्वम्—अर्थक्रियाभिलाषपरवशतां, व्युत्पत्ति—वृद्धव्यवहारशरणतां च अनतिक्रम्य विद्यत एव आभासः ॥ ३ ॥

क्व यथा ? इति निदर्शयितुम् आह—

दीर्घवृत्तोर्ध्वपुरुषधूमचन्दनतादिभिः ।
यथाभासा विभिद्यन्ते देशकालाविभेदिनः ॥ ४ ॥
तथैव सद्घटद्रव्यकाञ्चनोज्ज्वलतादयः ।
आभासभेदा भिन्नार्थकारिणस्ते पदं ध्वनेः ॥ ५ ॥

यद्यपि घट बाहर में एक ही अर्थ के रूप से दिखायी पड़ता है फिर भी उतना ही घट का यह रूप है—ऐसा स्वीकार नहीं करना होगा, किन्तु पृथक् विभाग को भी वह सह सकता है, देखिये—अर्थिता के अनुसार स्वतन्त्र विचार करने पर पूर्व प्रसिद्धि को लेकर तीन प्रकार के विवेक पृथक्-पृथग्रूप से आभासित होते हैं। इस प्रकार एक ही स्वलक्षण कैसे हो सकेगा ? इसका उत्तर देते हैं कि ये अलग-अलग भासित होनेवाले आभासों के जो विमर्श प्राणभूत हैं वे प्रत्याभास में ही विश्रान्त हो जाते हैं, तब परत्व एवं अपरत्व सत्ता का व्यवहार सामान्यतया होता है, कभी गौण प्रधान भेद से 'अत्र इदं इत्थम्' यहाँ पर यह ऐसा है; यह मिला हुआ विमर्श एक स्वालक्षण्यरूप में हो जाता है, 'अपि' शब्द भिन्न क्रम के अर्थ में दिया गया है, जिससे सिद्ध होता है कि अनुसन्धान के द्वारा मिश्रित विमर्श से सिद्ध किया गया एक पदार्थ भी रुचि की स्वतन्त्रता से, अर्थिता से और व्युत्पत्ति से, भिन्न-भिन्न आभासों से युक्त हो जाता है और वृद्धजनों के उपदेश से प्राप्त ईश्वर संकेतरूप व्युत्पत्ति के बिना भी व्यवहार का होना असम्भव है ॥ ३ ॥

यह कहाँ पर ? उसे बताया जाता है—

अत्यन्त लम्बा चौड़ा व्यक्ति धूम, चन्दनादि के द्वारा देश एवं काल के भेद से भिन्न-भिन्न रूपों में भासित होता है। उसी प्रकार विद्यमान घट भी स्वर्ण के घटियाँ-बढ़िया के भेद से तथा उच्चारण के भेद से भिन्न-भिन्न पदार्थ रूपों में भासित होता है ॥ ४–५ ॥

पहले एक चेतन पुरुष में ही देखिये; फैले हुए देश में व्याप्त होना इसी दीर्घता को परामर्श करता है जो कि वृक्षादि में भी है, जिसमें जोड़ ( अदृश्य सन्धि का स्थान ) मालूम न हो, ऐसी

इह तावत् एकस्मिन्नपि चेतनतया प्रसिद्धे पुरुषस्वलक्षणे विततदेशव्यापितां दीर्घतामेव कदाचित् विमृशति, या—तरूणामपि अस्ति, निःसन्धिबन्धरूपतां वा वृत्ततां, या—शिलानामपि संभविनी, ऊर्ध्वदिगाक्रमणरूपां वा ऊर्ध्वतां, या—स्थाणोरपि सम्बन्धिनी गमनागमनादि-स्वतन्त्रभावयोग्यतारूपं वा पुरुषत्वं, यत्—अन्यपुरुषसाधारणं, तथाहि—स्वतन्त्रया वा इच्छया रुचिरूपया एवं कुर्यात्, यथोक्तं—'या तु व्याक्षेपसारत्वाच्चेतसः स्वरसोद्गता।' इति विततदेश-व्यापिन एव वा अर्थान् तिरोधिलक्षणाम् अर्थक्रियाम् अर्थयमानो विभजेत्, एवं व्यवहारे वृद्धैः कीदृक् दीर्घं नाम गीयते इति व्युत्पित्समानो व्युत्पादयितुमिच्छुः वा विभागं कुर्यात्, इत्येवं—तत्र आभासानां भेदः, एकस्वलक्षणं तु—एकस्मिन् देशाभासे कालाभासे च विश्रान्तेः, देशकाला-भासावेव हि सामान्यरूपताप्रयोजकव्यापित्वनित्यत्वखण्डनाविधानसविधवृत्ती विशेषरूपतां वितरतः, एवं पुरुषत्ववत् अन्येऽपि ब्राह्मणाद्याभासा अपि निरूप्याः, एवम् अत्र तावत् प्रसिद्धतर आभासभेदो—जडाजडसाधारणबहुतरधर्मास्पदत्वात्, अनेन निदर्शनेन धूमेऽपि धूमत्वचन्दनत्व-श्रीखण्डचन्दनोत्थितत्वादयः प्रसिद्धा आभासभेदा विभजनीयाः, अनेन तु प्रसिद्धेन दृष्टान्तेन अप्रसिद्धभागोऽपि यो घटः तत्रापि आभासभागभेदो भवति, तथाहि—किञ्चिदपि अत्र नास्ति इति हुङ्कुङ्मिव आपद्यमानो घटं पश्यन् 'अस्ति इदम्' इति सत्त्वाभासमेव पश्यति, अपरान् आभासान् नाम्नापि तु न आद्रियते, तथा उदकाहरणार्थी घटाभासम्, स्वतन्त्रनयनानयनयोग्यवस्त्वर्थी द्रव्याभासम्, मूल्याद्यर्थी काञ्चनावभासम्, हृद्यतार्थी औज्ज्वल्याभासम्, आदिग्रहणात् दृढतर-

गोलाई को भी परामर्श करेगा तो ऐसी गोलाई शिलाओं में भी रहती है और ऊपर की ओर फैलाव रहता है; ले जाना और ले आनारूप आवागमन स्थाणु में भी तो पायेगा और रहती ही है। एवं दूसरे पुरुषों भी है, इसीलिए स्वतन्त्रता से अपनी-अपनी रुचि के अनुसार जैसा चाहे वैसा परामर्श कर सकता है, जिसके विषय में कहा गया है—

चित्त की व्याकुला के कारण अपनी-अपनी इच्छा के अनुसार अनेक परामर्श होते हैं। फैले हुए देश में व्याप्त पदार्थों को छिपाना रूप अर्थक्रिया को चाहता हुआ यदि व्यवहार करे तो वृद्धजनों ने दीर्घ का लक्षण तब कैसा किया है यह माना जाय; इसकी व्युत्पत्ति करनेवाले की इच्छा का यदि विभाग करें तो आभासों का भेद निश्चित ही होगा। इसमें संशय नहीं है, एक ही देशाभास और एक ही कालाभास में विश्रान्ति होने से, देश और काल ही सामान्यरूप से प्रयोजक व्यापिता और नित्यता का वितरण करेंगे, इस प्रकार से पुरुषत्व के परामर्श में भी ब्राह्मण और क्षत्रियादि का परामर्श हो सकता है, जड और अजड इत्यादि साधारणतया बहुत प्रकार के धर्मों का विमर्श हो सकता है, इसी दृष्टान्त से धूम में धूमत्व एवं चन्दनत्वादि भेद भी निकल सकते हैं, इस प्रसिद्ध दृष्टान्त से घटादि परामर्श को भी समझ लेना चाहिए, देखिये—कुछ भी यहाँ पर नहीं है—ऐसा कहनेवाला घट देख लेता है तो 'अस्ति इदम्' ऐसी वस्तु की सत्ता का ही परामर्श करता है और अन्य तो आभासों के नाम से भी ग्रहण नहीं करते, जल ले आनेवाला उसको घडे का परामर्श करेगा; स्वतन्त्र द्रव्यरूप से लेनेवाला उसे द्रव्य ही समझेगा; मूल्यार्थी उसे स्वर्ण घट मानेगा; और स्वच्छता को चाहनेवाला उसकी शुभ्रता का परामर्श करेगा, इस प्रकार अनेक तरह से दृढता का आभास हुआ करता है, एवं रुचि और व्युत्पत्ति में भी जोड देना

भावार्थो दार्ढ्याभासम् इति द्रष्टव्यम्, एवं रुचिव्युत्पत्त्योरपि योजनीयम्, एवम् एते आभासभेदा एव वस्तु—आभासमानतासारत्वात् वस्तुतायाः, योऽपि आभासस्य प्राणभूतो विमर्शः सोऽपि प्रत्याभासमेव—शब्दस्य अभिजल्पात्मनो बोधजीवितप्रख्यस्य प्रत्याभासमेव विश्रान्तेः, सन् घटो लोहितः इत्याद्यर्थक्रियाकारित्वमपि अन्वयव्यतिरेकाभ्यां प्रत्याभासमेव नियतं—सदाभासेन हृद्भङ्गपरिहारमात्रस्य सम्पादनात्, तत्र आभासान्तरस्य या अपेक्षा सा अग्न्याभासेन—अर्थक्रियायां साध्यायां पात्राभासस्य इव तदाभासनान्तरीयकत्वेन आभासान्तरस्याप्यनियतस्य अपेक्षणात्; एवं येन येन मुखेन अर्थो विचार्यते तेन तेन आभासमात्रात्मैव—तथैव प्रतिभासनात् विमर्शनात् अर्थक्रियाकरणाच्च, इति सिद्धम्, एवं प्रसिद्धतरप्रसिद्धाप्रसिद्धत्वातिशयेन एकोऽपि अर्थो ग्रन्थकारेण त्रैधं निरूपितो 'दीर्घवृत्तेति धूमेति सद्घटेति' ॥ ५ ॥

ननु एवं प्रत्याभासमेव वस्तुत्वे एको घटात्मा न वस्तु स्यात् ? इत्याशङ्क्याह—

आभासभेदाद्वस्तूनां　नियतार्थक्रिया　पुनः ।
सामानाधिकरण्येन　प्रतिभासादभेदिनाम् ॥ ६ ॥

आभासानां मिश्रं यद्रूपं तत्र अवश्यं कश्चिदाभासः प्रधानत्वेन अन्याभासानां विश्रान्तिपदीकर्तव्यः स तेषां समानमधिकरणं, तेन सह यस्तेषां सम्बन्धः तत् सामानाधिकरण्यं, तेन उपलक्षितो यः प्रतिभासः—अर्थोन्मुखः प्रकाशः तदनुप्राणकश्च कश्चन पदात्मा परामर्शः—तस्य सर्वस्य एकाभासविश्रान्ततानियमात्, तस्मात् तं सामानाधिकरण्याभासं समनुप्राणयति वाक्यात्मा

चाहिए, इस प्रकार ये सभी आभासों के भेद ही वस्तुओं के आभासों में हुआ करते हैं, इसीको आभास का प्राणभूत विमर्श कहा जाता है। इन सभी की प्रत्याभास में ही विश्रान्ति समझना चाहिए, अन्वय व्यतिरेक से घट है, परन्तु वह घट रक्त है, इत्यादि अर्थक्रियाकारिता के कारण प्रत्याभास ही नियत माना जाता है, आभास तो हृद् भंग का परिहार मात्र सम्पादन करता है, दूसरे आभास की अपेक्षा अग्नि के आभास से अर्थक्रिया सिद्ध करने में दूसरे की आवश्कता केवल पड़ती है। उसी प्रकार जहाँ पर जिन-जिन वस्तुओं में दूसरी-दूसरी वस्तुओं की अपेक्षा हो उन-उन पदार्थों का परामर्श कर लेना चाहिए। इसी कारण ग्रन्थकार ने प्रसिद्धतर और प्रसिद्ध एवं अप्रसिद्धत्व अतिशय अर्थात् विशेष के योग से एक ही अर्थ को तीन प्रकार से दिखाया है 'दीर्घवृतेति घूमेति सद्घटेति' ॥ ५ ॥

अब शङ्का करते हैं कि यदि एक प्रत्याभास ही वस्तु है तो एक घटरूप जो वस्तु है, वह पदार्थ नहीं हो सकता ? इस शङ्का का उत्तर देते हैं—

आभासों के भेद से ही वस्तुओं में भेद होता है; अर्थक्रिया तो सामानाधिकरण्य के कारण प्रतिभास द्वारा अभेद रखनेवाली वस्तुओं से होती है ॥ ६ ॥

जो आभासों का मिला हुआ रूप है उसमें निश्चित् कोई न कोई आभास प्रधान रहता है। यही आभासों का समान अधिकरण है, उसके साथ जो उनका सम्बन्ध है वही सामानाधिकरण्य कहलाता है। इससे युक्त जो आभास है वह आभास क्या है ? अर्थ को ओर उन्मुख प्रकाश उसी से अनुप्राणित होकर तद्रूप परामर्श रहता है; क्योंकि वे सभी एक ही आभास में जाकर विश्रान्ति लेते हैं, इसीलिए उस सामानाधिकरण्य आभास को वाक्यरूप वाक्यार्थ का परामर्श

वाक्यार्थपरामर्शरूपो विमर्शः—इह इदानीं एष घटोऽस्ति इत्येवंरूपः, ततो हेतोः ये अभेदिन एकस्वलक्षणताम् आप्ता न तु स्वरूपभेदम् उज्झन्तः तेषाम् अन्याविशिष्टा समुदितरूपा अर्थक्रिया, आभासविमर्शभेदे पुनरन्या नियता एकैकमात्ररूपा, आभासप्रतिभासशब्दाभ्यां सूत्रे विमर्शोऽपि आक्षिप्तो मन्तव्यः, पुनःशब्दो विशेषद्योतकः काकाक्षिवत् उभयत्र योज्यः, बहुवचनेन ऐक्येऽपि स्वरूपभेदापरित्याग उक्तः, तत्र च ऐक्यावभासे परतन्त्रं सत् पृथक्त्वं यदा आभासानां तदा समानरूपव्यक्त्युपरञ्जकत्वेन पारमार्थिकं सामान्यरूपत्वम्, घटाभासस्य तु शुद्धस्य स्वतन्त्रपरामर्शे योग्यतामात्रेण सामान्यरूपता न वस्तुतो—द्रव्यादन्यो हि सर्वः पदार्थः परतन्त्रतासारः, एवम् एकोऽपि घटात्मा इत्यपि सत्यमेव—आभ सविमर्शार्थक्रियाबलेन तथा अवस्थापनात् इति ॥ ६ ॥

ननु एकेनैव अर्थक्रिया न तत्र, अपि तु आभाससमुदायात् अर्थक्रियासमुदायः, आभासाश्च भिन्ना अपि यदि एकाम् अर्थक्रियां कर्तुं मिश्रीभवन्ति, तदा कस्तेषाम् इयत्तावधिः ? इति चोद्यम् अपवदति—

पृथग्दीपप्रकाशानां स्रोतसां सागरे यथा ।
अविरुद्धावभासानामेककार्या तथैक्यधीः ॥ ७ ॥

पृथक् वर्तिन्यो याः प्रदीपस्य प्रभाः सूक्ष्मतमा अवलोकनसामर्थ्याधानलक्षणां याम् अर्थक्रियां न कृतवत्यः तामेव एकभवनाभ्यन्तरं संमूर्छितात्मानो विदधते, न तत्र अर्थक्रियाणां

अनुप्राणित विमर्शरूप से करता है जैसे इस समय यह घट विद्यमान है; ऐसा कहा जाता है।

इसी हेतु से जितने भी अभेदात्मक आभास एकता को प्राप्त होकर अपने स्वरूप के भेद को न छोड़ते हुए दूसरे से मिलते हुए समुदायरूप में अर्थक्रिया कराते हैं, आभास का विमर्श से भेद होने पर तो दूसरे नियत एकरूप आभास प्रतिभास शब्दों से विमर्श का आक्षेप मात्र है—ऐसा सूत्र में मानना होगा। यहाँ पर 'पुनः' शब्द का दोनों वाक्यों में काकाक्षिगोलक' न्याय से अन्वय होता है। बहुवचन के द्वारा एकता होने पर भी स्वरूप भेद को नहीं छोड़ना होगा, इस प्रकार वहाँ पर एकता के आभास में परतन्त्र होकर जब आभासों की पृथग्रूपता रहेगी तब तो समानरूप-वाले व्यक्ति में उपरञ्जकत्व होने से सामान्यरूपता पारमार्थिक ही रहती है। इस प्रकार एक भी घटरूप परामर्श सत्य ही है, आभास और विमर्श के द्वारा अर्थक्रिया करने के बल से वैसा ही वह स्थापित होता है।

अब शङ्का करते हैं कि एक आभास के द्वारा ही अर्थक्रिया नहीं होती है, किन्तु आभास समुदाय से अर्थक्रिया समुदाय होता है और आभास भी भिन्न-भिन्नरूपों में रहते हुए एक अर्थक्रिया करने के लिए मिल जाते हैं, तब फिर उनकी इयत्ता ( संख्या ) की अवधि क्या होगी ? इस शङ्का का अपवाद ( खण्डन ) करते हैं—

अलग-अलग स्वयं प्रकाशित प्रदीप जैसे सरिताएँ सागर में जाकर एक हो जाती हैं। उसी प्रकार अविरुद्ध ( समान ) अनेक आभास एक कार्य के लिए एकता को प्राप्त हो जाते हैं॥ ७॥

भिन्न-भिन्न प्रदीप की प्रभा सूक्ष्म से सूक्ष्मतर देखने में असमर्थ होकर जिस अर्थक्रिया को नहीं कर सकती वही यदि सब एक में मिल करके विस्तृत प्रकाश कर देती है, तो सूक्ष्म से भी सूक्ष्मतम पदार्थ को दिखा सकते हैं, वहाँ पर अर्थक्रिया का समुदाय तो नहीं होता, उसी प्रकार

समुदायोऽस्ति, सागरपतितानि च स्रोतांसि बहुतरङ्गारम्भार्थक्रियाकारीणि, तद्वत् घटः काञ्चनो लोहितः ततोऽयम् शिवलिङ्गशिरः समावर्जनोज्जितसलिलाहरणार्थक्रियोचितो दृष्टमात्र एव तीव्रप्रीतिलक्षणार्थक्रियाकारी, इति—सिद्धमेवार्थक्रियाकारित्वम्, यत् पुनराभासानां मिश्रणे का सीमा इति ? तत्र उच्यते—येषाम् अविरोधः त एव आभासा मिश्रीभवन्ति, नहि रूपाभासो मारुताभासेन मिश्रीभवति—विरोधात्, सोऽपि च नियतिशक्त्युत्थापितः—पृथक् ये दीपप्रकाशाः तेषां सम्बन्धि यदेकं सागरे स्रोतसां च यदेकं वस्तु तेन कार्या यथा ऐक्यधीः तथा अविरुद्धा ये अवभासा घटलोहितकाञ्चनादयः तेषां सम्बन्धि यदेकं स्वलक्षणं तत्कार्या ऐक्यधीरिति सम्बन्धः, ऐक्यधिया—प्रतिभासो विमर्शोऽर्थक्रिया च इति स्वीकृतम् ॥ ७ ॥

ननु एवं प्रत्याभासं प्रमाणस्य विश्रान्तत्वात् अग्न्याभासे अग्निज्ञानं प्रमाणं धूमज्ञानं च धूमाभासमात्रे कार्यकारणभावावभासोऽपि तावन्मात्रे, ततश्च धूमाभासोऽपि अग्न्याभासं व्यभिचरेत् इत्यादिबहुतरोपप्लवप्रसङ्गः ? इति शङ्कां व्यपोहितुम् आह—

**तत्राविशिष्टे वह्न्यादौ कार्यकारणतोष्णता ।**
**तत्तच्छब्दार्थताद्यात्मा प्रमाणादेकतो मतः ॥ ८ ॥**

तत्रेति—प्रत्याभासं प्रमाणं विश्राम्यति, इत्यस्मिन्नपि पक्षे न कश्चित् दोषः, तथाहि—

सागर में गिरी हुए सभी नदियाँ मिल कर एक तरङ्ग तथा बहुत प्रकार के भी अर्थक्रियाकारिरूप तरङ्ग किया करती हैं। इसी प्रकार शिवलिङ्गाकार घट स्वर्ण का हो या चाहे तांबे का हो जलाहरण रूप कार्य तो करतो ही है, इसीलिए अनेक आभासों का अर्थक्रिया करना सिद्ध ही है। आभासों के मिश्रण में क्या अवधि होनी चाहिए ? इसका यह उत्तर है कि जिन आभासों में विरोध नहीं हैं वे ही आभास आपस में मिलते हैं। जैसे रूपाभास, मारुताभास से नहीं मिलता; क्योंकि इन दोनों में परस्पर विरोध है। वायु में रूप का अभाव मिलता है और वह भी विरोध नियति-शक्ति से उठाया गया है। भिन्न-भिन्न रूपों में होनेवाले दीप प्रकाशों के सम्बन्धी, जो कि एक सागर में या गृह में वस्तु को प्रकाशित करता है उनसे अविरुद्ध होकर ही प्रकाश करता है, इसी प्रकार यहाँ घट में लोहित एवं काञ्चन इत्यादि जो कुछ आभास हैं वे भी एक कार्य को सम्पादन करने के लिए आपस में एकताबुद्धि उत्पन्न कर देते हैं, इसीलिए एकता की बुद्धि से प्रतिभास, विमर्श और अर्थक्रिया इन तीनों विषयों को स्वीकृत किया गया है ॥ ७ ॥

प्रत्येक आभास में प्रमाण की विश्रान्ति को माना जाय, तो अग्नि के आभास में अग्नि का ज्ञान प्रमाण होगा और धूम के आभास में धूम का ज्ञान प्रमाण होगा, इसी प्रकार कार्यकारणभाव के आभास में कार्य-कारण का ज्ञान प्रमाण होगा, इस प्रकार भिन्न-भिन्न होने के कारण धूमाभास, अग्नि-आभास का व्यभिचारी हो जायेगा। ऐसे तो बहुत से व्यभिचार उपस्थित होंगे ? इस शङ्का के समाधान करने के लिए अब कहते हैं कि—

सामान्यतः वह्नि आदि में कार्य-कारणभाव और ऊष्णता उन-उन शब्दों की अर्थता अर्थात् अभिधेयता एवं गन्ध-रस शून्यता आदि से युक्त स्वभावता वह्नि में एक ही प्रमाण से माननी पड़ेगी ॥ ८ ॥

प्रत्याभासों में प्रमाण सीमित होता है, इस पक्ष में भी कोई दोष नहीं है—देखो, वह्नि

**अविशिष्टो यद्यपि वह्न्याभासो देशकालाभासप्रमुखैः आभासैः असंकीर्णत्वेन सामान्यमात्ररूपत्वात् तथापि स एव आभासो यावद्भिराभासैरविनाभूतो भगवत्या नियतिशक्त्या नियमितः तावतोऽव-भासान् स्वीकृत्यैव प्रमाणकृतां निश्चयपदवीम् अवतरति, तथा च—वह्न्याभास इन्धनकार्यत्वा-भासेन धूमकारणताभासेन उष्णस्वभावताभासेन च स्वाभाविकाव्यभिचरितसाहचर्यः प्रतीयमानो विश्वत्रैव सर्वदैव च तथा प्रतीतो भवति—एकत्वात् तस्य, अस्वाभाविकोऽपि यः स्वभावः पुरुषकृतसमयादिमुखप्रेक्षी, तद्यथा—अग्निशब्दवाच्यत्वं घटप्रतिपत्तिकारित्वमित्येवमादिः, सोऽपि एकप्रत्यक्षादेव निश्चीयते, तस्य हि प्रमातुः कृत्रिमेण इतरेण वा रूपेण—आभासान्तरनान्तरीय-कतया असौ वह्न्याभासः संविदितः सर्वदेशकालगतः तथैव संविदितः, इदि तत्र किं प्रमाणान्तरेण—तस्य तस्य यथेच्छं पुरुषसमयेन नियुज्यमानस्य शब्दस्य अर्थोऽयं ज्वलद्भास्वराकार आभास इत्यनेन नियतिशक्तिरेव सर्वत्र शरणम् इति पिशुनयति, एतदुक्तं भवति—यत्किंचित् कृत्रिमम् इतरद्वा भावाभासस्य आभासान्तरेण नान्तरीयकत्वं प्रतिभाति तत्र नियतिशक्तिमात्रमेव परं विजृम्भते, तत्तु नियतिशक्तिरूपं पूर्वापरविततकालम्—इन्धनकार्यत्वे धूमकारणत्वे उष्णस्व-भावत्वे च आभासमाने, अनतिचिरकालं तु वह्न्यादिशब्दवाच्यत्वाभासादाविति विशेषः, ततश्च नियतिशक्त्युपजीवनेन धूमाभासोऽपि अग्न्याभासाव्यभिचारी इति न कश्चित् विप्लवः, कार्यता कारणता उष्णता च तस्य तस्य शब्दस्यार्थता तत्तच्छब्दाभिधेयता, आदिग्रहणात्—गन्धरस-**

सामान्यरूप है; क्योंकि देश-कालादि के आभासों से असङ्कीर्ण है वह सामान्यरूप से ही रहती है, फिर भी वह आभास जितने आभासों से संमिलित रहता है यह भगवती नियति-शक्ति से आबद्ध रहता है और उन नियमित आभासों को प्रमाण करनेवाले के लिए निश्चयपदवी को प्राप्त करता है। वह्नि का जो आभास इन्धन है उसका कार्य होने के कारण, उसके आभास के साथ धूम के कारणताभास से और ऊष्ण स्वभाव के आभास से स्वाभाविक अव्यभिचरित इन सबों का आभास रहता है इस प्रकार सर्वत्र प्रतोयमान होकर प्रतीत होता है। अस्वाभाविक भो पुरुष कल्पित समयादिक की अपेक्षा करनेवाला ही होता है। जैसाकि अग्नि शब्द का वाच्य घट सम्बन्धी ज्ञान कराने में कारण नहीं होता, वह भी प्रत्यक्ष से ही निश्चित किया जाता है, उसका प्रमाता चाहे कृत्रिम हो या अकृत्रिम हो; दूसरे आभास से अवश्य संमिलित होने के कारण वह वह्नि का आभास सब देश-काल में व्याप्त होकर वैसा ही ज्ञात होगा। अतः वहाँ फिर दूसरे कोई प्रमाण की आवश्यकता नहीं रहती, उन-उन आभासों को पुरुष नियम के अनुसार इच्छानुकूल नियोग करना इस शब्द का यही अर्थ है कि चमकता हुआ आभास अर्थात् भास्वर आकार है, इससे सर्वत्र नियति-शक्ति का ही शरण सूचित होता है।

इसका तात्पर्यार्थ यह है कि जो कुछ कृत्रिम या अकृत्रिम भावाभास के साथ दूसरे आभास संयुक्त होकर प्रतिभासित होता है और इसमें नियति-शक्ति का ही सामर्थ्य रहता है, वह नियति-शक्ति पूर्वापर नियमकाल की अपेक्षा करके इन्धन कार्य, धूम कारण और ऊष्णस्वभाव में आभासित होने पर शीघ्र ही वह्नि शब्द के वाच्य आभास में विशेषरूप से भासित होती है, इसीलिए नियति-शक्ति के जीवन से धूमाभास भी अग्नि के आभास से व्यभिचरित नहीं होता, इसमें भेद नहीं है, कार्यता, कारणता और ऊष्णता उन-उन शब्दों का अर्थ और उन-उन का अभिधान ( कथन ) आदि ग्रहण करने से गन्ध-रस से शून्यता और उर्ध्वादि दिशाओं से संयोग

शून्यता ऊर्ध्वदिक्संयोगिता जलविरोधिता च, इत्येवं-भूतो य आत्मा स्वभावो वह्न्यादौ स एकस्मादेव प्रमाणात् मतः—संविदित इति यावत्, 'अर्धेच्छेदः' इति, काव्ये अयं समयो, न ग्रन्थे, इति—द्वितीयतृतीयपादयोः सामस्त्येऽपि अदोषः, पृथग्भावप्रत्ययप्रयोगो—वस्त्वन्तरापेक्षानपेक्षातः कृतकत्वाकृतकत्वाभ्यां वर्गभेदं सूचयितुम् ॥ ८ ॥

एवं भावस्वभावव्यपस्थापनं प्रत्याभासविश्रान्तेन एकेनैव प्रमाणेन क्रियते, तेषामपि आभासानां यथोचितं यत् अन्योन्यनान्तरीयकत्वं तत् एकेन संवेदनरूपेण तदनेकप्रमिताभास-विषयपूर्वप्रवृत्तसंवेदनकलापानुप्राणकान्तर्मुखस्वरूपेण निश्चियते, तच्च ऐक्याभासमात्रे अनुसंधानरूपं प्रमाणं, अनुसन्धीयमानेषु तु आभासेषु गृहीतग्राहित्वात् अप्रमाणं, तत्र तु प्रत्येकं प्राच्यमेव प्रमाणं, भावस्वभावव्यवस्थापनात्मकमानसप्रवृत्त्यतिरिक्तकायप्रवृत्त्युपयोगस्तु यथा प्रमाणाविषयः तं प्रकारं दर्शयितुम् आह—

**सा तु देशादिकाध्यक्षान्तरभिन्ने स्वलक्षणे ।**
**तात्कालिकी प्रवृत्तिः स्यादर्थिनः……………**

वाह्या तावत् अर्थक्रिया स्पलक्षणतः, स्वालक्षण्ये च देशकालाभासयोजनस्यैव अन्तरङ्गत्वम् तत्रापि च विशेषरूपतापि परामर्शं विना न किंचित्, परामर्शद्वारेण तु प्रमातरि विश्राम्यन्ती, प्रमातुः संवेदनैकरूपस्य देशकालायोगेन ऐक्यात् अभ्युज्झत्येव विशेषरूपताम्, इति—सर्वत्र

और जल से विरोध इत्यादि जितने भी वह्नि के विरोधी भाव हैं वे सभी एक ही प्रमाण से विदित हो जाते हैं, 'अर्धेच्छेदः' आधे पाद में भेद है; यह काव्य का नियम है, ग्रन्थ में नहीं होता है, द्वितीय-तृतीय पाद में समास होने पर भी कोई दोष नहीं होता, भाव में जो प्रत्यय लगाया गया है वह पृथग्रूप से तो दूसरी वस्तु की अपेक्षा और अनपेक्षा की विवक्षा को लेकर कृतकत्व एवं अकृतकत्व के भेद दिखाने के लिए ही है ॥ ८ ॥

इस प्रकार भाव-स्वभाव की व्यवस्था करना प्रत्याभास में विश्रान्त होनेवाले एक ही प्रमाण से होता है, उन आभासों का भी आभासों में यथोचित एकता के द्वारा पूर्व से आनेवाले ज्ञानसमूह से अनुप्राणित होकर अन्तर्मुख स्वरूप से निश्चय करना चाहिए और वह संवेदन एकता के आभास में केवल अनुसन्धानरूप प्रमाण ही होता है, उनसे अनुसन्धान किये गये आभासों में गृहीतग्राही होने के कारण अप्रमाणता आ जाती है; क्योंकि वहाँ पर पूर्व के ही प्रत्येक प्रमाण को माना जाता है। भाव स्वभाव की व्यवस्था करनेवाली मानसिक प्रवृत्ति भी अतिरिक्त शरीर प्रवृत्ति से भिन्न होती है, उसके प्रमाण विषयक प्रकार दिखाने के लिए अब कहते हैं—

वह अर्थक्रिया देश-कालादि के ज्ञान से भिन्न रह कर अपने लक्षण में रहती है, उसकी उस काल में प्रवृत्ति का होना अर्थ के इच्छुक के अनुमान से है ॥ ९ ॥

बाहरी अर्थक्रिया तो अपने लक्षण से होती है और वह अपने लक्षण में देश-कालादि के आभास की योजना से अन्तरङ्गरूप में रहती है। उसमें भी विशेषरूपता के परामर्श से भिन्न दूसरा कुछ नहीं है; परामर्श के द्वारा तो प्रमाता में विश्राम लेनेवाली अर्थक्रिया प्रमाता के ज्ञान से देश-काल से युक्त होकर विशेषरूपता को छोड़ती हुई ऐक्यभाव को प्राप्त हो जाती है। इस प्रकार

अद्वयं परमार्थतः, तथापि तु या विशेषरूपता भाति तस्याः परमेश्वरस्वातन्त्र्यमेव निमित्तं यत्, 'मायाशक्तिः' इत्युच्यते, तत्र विशेषसाध्यार्थक्रियाविशेषेण योऽर्थी तस्य या स्वलक्षणे तस्मिन् विशेषरूपे अर्थे तत्कालभाविनी वाङ्मनःकायप्रवृत्तिः सा देशे, आदिग्रहणात् काले स्वरूपान्तरे, स्वरूपानुसन्धानादौ च यानि अध्यक्षान्तराणि बहूनि प्रत्यक्षाणि तेषां भिन्ने भेदे निमित्ते सति भवति, न अन्यथा, न ऐकैकतः प्रमाणात् सा प्रवृत्तिः अपि तु प्रमाणसमूहादेव, समूहता च परस्य न उपपन्ना; अस्माकं तु एकस्वसंवेदनविश्रान्तिमयी स युज्यते,—इति उक्तं प्राक् 'न चेदन्तःकृता······'। ( २।३।७ ) इत्यत्र । इयमेव च सा प्रमाणानां योजनां योजिका च युक्तिरित्युच्यते गन्धद्रव्यादियुक्तिवत्, एवं प्रत्यक्षसमूहादेव प्रवृत्तिरिति तात्पर्यम् । देशादिकेष्वपि अध्यक्षेषु सत्सु देशाभासयोजनायामपि अन्तः प्रमातरि अभिन्नं यत् स्वलक्षणं तत्र,—इति वा संगतिः । देशादिकैरध्यक्षान्तरैः प्रत्यक्षीभूतैराभासान्तरैर्भिन्ने स्वलक्षणे निमित्ते सति प्रवृत्तिः,—इति वा योजना । अत्रापि प्रमेयबहुत्वनिरूपणदिशा तदनुयायित्वेन अभिधीयमानः प्रमाणसमूहो निमित्तत्वेन उक्तो भवति ।

ननु किं प्रात्यक्ष्यामेव प्रवृत्तौ प्रमाणसमूह उपयोगी ? न, इत्याह—

······················अप्यनुमानतः ।। ९ ।।

न केवलं प्रत्यक्षतः प्रवृत्तिः देशादिकाध्यक्षान्तरभेदरूपप्रमाणसमूहनिमित्ता, यावत्

सर्वत्र परमार्थरूप से अद्वैत का ही बोध होता है, फिर भी वहाँ पर जो विशेषता भासती है उसका परमेश्वर के स्वातन्त्र्य में निमित्त है, जिसको 'माया-शक्ति' के नाम से पुकारा जाता है । उस माया-शक्ति के द्वारा निर्मित विशेषरूप में विशेष साध्य अर्थक्रिया विशेषण से ही जो अर्थी होता है उसके विशेपरूप अर्थ में तत्काल होनेवाली मन, वचन और शरीर की प्रवृत्ति देश में तथा काल में व दूसरे स्वरूप में और स्वरूप के अनुसन्धान में, जितने-जितने प्रत्यक्ष होंगे, उन सभी प्रत्यक्षों के भिन्न-भिन्न निमित्त होने पर भी भेद होंगे, अन्यथा नहीं होंगे । एक-एक प्रमाण से प्रवृत्ति नहीं होती है किन्तु प्रमाण समूह से ही होती है, वह प्रमाण समूह दूसरे को नहीं ज्ञात होता, वह तो एक ज्ञान में ही विश्रान्त होता है—यह पहले ही कह चुके हैं ।

'न चेदन्तःकृता·····।' ( २.३.७ ) इस स्थल में और यही प्रमाणों की योजना है, इसकी योजना करनेवाली युक्ति कही जाती है गन्ध द्रव्यादि की भाँति, इस प्रकार अनेक प्रत्यक्ष प्रमाणों से ही प्रवृत्ति होती है—यही तात्पर्य है । देश-कालादि से प्रत्यक्ष होनेपर भी देशाभास की योजना में प्रमाता का अभिन्न अपना लक्षण ही प्रमाण होता है, ऐसी भी सङ्गति लगाई जा सकती है या देश-कालादि के भिन्न-भिन्न ज्ञान होनेपर प्रत्यक्ष किये गये भिन्न-भिन्न आभासों के द्वारा अन्य स्वलक्षण रहने पर प्रवृत्ति होती है—ऐसी भी योजना हो सकती है । यहाँ पर भी प्रमेयों के बहुत से निरूपण के द्वारा उनके अनुयायिरूप से अभिधीयमान प्रमाण समूह निमित्त होते हैं—यह कहना होगा ।

इस पर शङ्का खड़ी करते हैं कि क्या प्रत्यक्ष में ही प्रमाणों के समूह का उपयोग होता है ? नहीं, यह बात नहीं है—

किन्तु अनुमान से भी प्रत्यक्ष में प्रमाणों के समूह का उपयोग होता है ।। ९ ।।

केवल प्रत्यक्ष प्रमाण से ही प्रवृत्ति नहीं होती है; जिसमें देश-कालादि दूसरे प्रत्यक्ष आदि

अनुमानतोऽपि तथैव, धूमाभासमात्रे अग्न्याभासमात्रे धूमस्याग्न्याभासाव्यभिचारित्वे पर्वताभासे च यानि प्रत्यक्षान्तराणि यच्च तद्गृहीतातिरिक्ते अयोगव्यवच्छेदे 'अग्निरत्र' इत्येवं-भूते पृथक् अनुमानं प्रमाणम् तत्समूहादेव अर्थिनः तात्कालिकी प्रवृत्तिः,—इति सम्बन्धः ॥ ९ ॥

एवं विमर्शबलादेव भेदाभेदव्यवस्था, तदेव हि परमेश्वरस्य संवेदनात्मनः शिवनाथस्य स्वातन्त्र्यशक्तिविजृम्भितं; ततश्च परैः यत् उच्यते 'दूरान्तिकादौ अर्थस्य अभेदः' इति तदपि उपपद्यते, न तु अन्यथा कथंचित्,—इति निरूप्यते—

दूरान्तिकतयार्थानां परोक्षाध्यक्षतात्मना ।
बाह्यान्तरतया दोषैर्व्यञ्जकस्यान्यथापि वा ॥ १० ॥
भिन्नावभासच्छायानामपि मुख्यावभासतः ।
एकप्रत्यवमर्शाख्यादेकत्वमनिवारितम् ॥ ११ ॥

प्रतिभासमात्रेण व्यवस्थां कुर्वतः कथं दूरादूरयोर्वस्तुनोरभेदः, ? प्रतिभासस्य सकलासकलावृतानावृतादितया यथाकथंचिदपि भेदात् । ननु विमर्शोऽपि प्रत्याभासं तथैव भिन्नता, ? सत्यं; तथापि तु परो यो विमर्शः स एवायं पदार्थ,—इति एकप्रत्यवमर्शरूपः; तेन प्राणितकल्पेन

भेद प्रमाण समूह निमित्त होते हैं, वहाँ पर अनुमान से भी प्रवृत्ति होती है। उसमें भी प्रमाण समूह का उपयोग होता है। जैसे धूमाभास मात्र में, अग्नि के आभास मात्र में, धूम अग्नि के आभास से अव्यभिचरित होने में इस प्रकार पर्वताभास में भी जितने भी भिन्न-भिन्नरूप से प्रत्यक्ष होते हैं, अयोगव्यवच्छेद में जैसे 'अग्निरत्र' अर्थात् यहाँ पर अग्नि है जिसमें पृथक् अनुमान प्रमाण होता है, उसमें प्रमाण समूह से अर्थी की तात्कालिक प्रवृत्ति होती है—ऐसा सम्बन्ध लगाना होगा ॥ ९ ॥

एवं विमर्श के बल से ही भेद और अभेद की व्यवस्था होती है, उसको ज्ञानस्वरूप शिवनाथ परमेश्वर की स्वातन्त्र्य-शक्ति का विकास कहा जाता है; इस विषय में दूसरे लोगों का कहना कि—'दूरान्तिकादौ अर्थस्य अभेदः' अर्थात् दूर एवं समीप में अर्थ का अभेद होता है—ऐसा ही ठीक बैठता है; नहीं तो, किसी प्रकार भी व्यवस्था की संभावना नहीं बन सकेगी—इस बात का निरूपण किया जा रहा है—

अर्थों के दूर और समीप होने के कारण प्रत्यक्ष प्रमाणरूप से या बाहर एवं आन्तर के दोषों से व्यक्त न होने के कारण भिन्नरूप से अवभासित होने की छाया को मुख्य अवभास से ही सिद्धि मान लेनी चाहिए। एक प्रत्यवमर्शन से एक की ही सिद्धि होती है ॥ ११ ॥

जब प्रतिभासमात्र से व्यवस्था करेंगे तो दूर और समीप में होनेवाले भाव-पदार्थों का अभेद कैसे हो पायेगा ? प्रतिभास तो समूहरूप से या अल्परूप से होने न होने के कारण यथा कथञ्चित् भी भेद तो हो सकता है। अब शङ्का करते हैं कि विमर्श में भी प्रत्याभास की भिन्नता ऐसी ही रहेगी ?

यह ठीक है; फिर भी वह दूसरा विमर्श ही यह पदार्थ सिद्ध करेगा, जो कि एक प्रत्यवमर्शरूप है, उसी जीवित कल्प के द्वारा सर्वत्र फैला देना ही मुख्य आभास का या एक रूप भाव के आभास का एक प्रत्यवमर्श कहा जाता है। वह उसके योग्य न होता हुआ भी भिन्नाभास छाया-

आसमन्तात् ख्यानं प्रथनं यस्य मुख्यावभासस्य एकरूपभावाभासस्य, एकप्रत्यवमर्शेऽसङ्कुचितोऽपि हि अस्त्येवैकावभासः, आभासविमर्शयोरन्योन्यमवियोगात्; तस्मात् मुख्यावभासादेकत्वमप्रतिहत-मास्ते। यदेवानुमितं तदेव दृष्टम्,—इत्यत्र प्रत्यक्षपरोक्षतारूपेणात्मना स्वभावेन भिन्ना अवभासच्छाया अमुख्योऽवभासो येषां तेषाम् एकत्वं मुख्यावभासत एकप्रत्यवमर्शानुप्राणितात्,—इति संगतिः। बाह्यान्तरतया भिन्नावभासानामैक्यं यथा—यदेव दृष्टं तदेवान्तरहमुल्लिखामि,—इति। व्यञ्जकानां दीपालोकादीनां दोषैर्भिन्नावभासानाम् ऐक्यं, यदेव रक्तोत्पलं दीपेन नीलं दृष्टं तदेव सूर्यांशुभिर्लोहितं पश्यामि,—इति। अन्येन वापि प्रकारेण इन्द्रियापाटवादिना एकपार्श्वसंमुखत्वादिना वा येषामवभासच्छाया भिन्ना, तेषामपि मुख्यप्रत्यवमर्शानुवर्त्यवभासस्वरूपबलात् ऐक्यमेव,—इति स्थितम् ॥ १०–११ ॥

ननु दूरादूरादावस्तु स एवार्थः प्रमात्रध्यवसितार्थक्रियांशे तथैवोपयोगात्, बाह्यान्तरत्वादौ कथम् आन्तरस्यार्थक्रियायां प्रमात्रध्यवसितायामनुपयोगात् ?—इति भ्रान्तिं भङ्क्तुमाह—

अर्थक्रियापि सहजा नार्थानामीश्वरेच्छया।
नियता सा हि तेनास्या नाक्रियातोऽन्यता भवेत् ॥ १२ ॥

इह 'कार्यकारणतोष्णता' ( २।३।८ ) इत्यत्र स्वरूपमिवार्थक्रियापि या मध्ये गणिता, सा सहजार्थस्वरूपभूता न भवति; तत्कारित्वं हि यस्मात् ईश्वरेच्छया नियतं भवने चाभवने च। यतो नैषा स्वरूपं, तेन तस्या अकरणात् हेतोर्भावस्यान्यत्वं नाशङ्कनीयं, स्वरूवभेदात् हि संभाव्येता-

रूप रहता है; क्योंकि आभास और विमर्श का परस्पर वियोग नहीं रहता है। इस बात को लोक व्यवहार में भी देखा जाता है कि जो अनुमान से किया गया था, उससे ही देखा गया है। यहाँ पर प्रत्यक्ष और परोक्षरूप स्वभाव से भिन्न होते हुए भी अवभास की छाया ( अमुख्यावभास ) जिनका होगा वैसा वही मुख्यावभास का एकत्वरूप प्रत्यवमर्श कहा जाता है या अनुप्राणित होता है—ऐसी सङ्गति बैठती है। जो मैंने देखा था उसीका अन्तःकरण में उल्लेख करता हूँ; यही भिन्न अवभासों की एकता है, पदार्थों को दिखानेवाले प्रदीप का आलोक आदि के दोष से भिन्न-भिन्न अवभासों की भी एकता होती है जैसे—दीप से रक्तकमल को नीलकमल देखते हैं, उसीको सूर्य रश्मियों से रक्त मैं देखता हूँ, इत्यादि। दूसरे प्रकार से भी इन्द्रियों में भेद होने से या एक भाग सन्मुख होने से जिनके आभास की छाया भिन्न दिखायी देती है, उनकी भी मुख्य प्रत्यवमर्श के पीछे चलनेवाले अवभास बल से एकता हो जाती है, यही स्थिर होता है ॥१०-११॥

अब शङ्का करते हैं कि दूर और समीप में प्रमाता के अभीष्ट क्रियांश उपयोगी होने के कारण वही अर्थ रहे, किन्तु भीतर और बाहर में तो उपयोग न होने के कारण कैसे भ्रान्ति ही रहेगी ? इस भ्रान्ति को दूर करने के लिए कहते हैं कि अर्थों की क्रिया स्वाभाविक नहीं होती, किन्तु ईश्वर की इच्छा से ही अर्थों की क्रिया नियत होती है। इसीलिए प्रमाता की क्रिया से अर्थक्रिया अन्यथा नहीं हो सकती ॥ १२॥

कार्यकारणोष्णता ( २-३-८ ) इस कारिका में जब कि स्वरूप के समान अर्थक्रिया को भी बीच में गिना है, वह स्वभाव से नहीं हो सकती; उसके होने और न होने में ईश्वर की इच्छा ही कारण होती है; क्योंकि ऐसा उसका स्वरूप नहीं है, इसीलिए प्रमाता उसको नहीं कर

न्यत्वं, न च स्वरूपम् अर्थक्रियाकारित्वम्,—इत्युक्तं वक्ष्यते च बहुशः। स्वरूपं च प्रत्यवमर्शबलादेकमेव बाह्यान्तरादावपि,—इति ॥ १२ ॥

ननु विमर्शबलादेव यदि वस्तूनां भेदाभेदव्यवस्था तर्हि इदानीं त्रिजगति निवृत्ता भ्रान्तिसंकथाः, शुक्तिकायामपि सत्यरजततैव आपतति 'इदं रजतम्' इति विमृश्यमानत्वात्; ततश्च भ्रान्त्यभावे बाधानुपपत्तेः किमर्थमुक्तं 'मितिर्वस्तुन्यबाधिता' ( २।३।२ ) इति। व्यभिचाराभावे हि 'अबाधिता' इत्यस्य विशेषणस्य व्यवच्छेद्यं न लभ्यते,—इत्याशङ्कां निरस्यति—

रजतैकविमर्शेऽपि शुक्तौ न रजतस्थितिः।
उपाधिदेशासंवादाद्द्विचन्द्रेऽपि नभोऽन्यथा ॥ १३ ॥

'इदं रजतं स्थिरं सर्वप्रमातृसाधारणम् अर्थक्रियायोग्यम्' इति इदमंशे रजताद्यंशेषु तत्संमेलनांशे च आभासविमर्शनबलात् न तावत् किंचित् मिथ्यात्वं, किंतु उत्तरकालं यो भविष्यति विमर्शो 'नेदं रजतं वस्तु स्थिरं प्रमात्रन्तरगम्यमभिमतकार्यकारि' इति, तद्विमर्शविमर्शनीयं यत् तत्पूर्वविमर्शकालसमुचितमेव रूपं तत् तस्मिन् पूर्वविमर्शकाले नैवामृश्यते, भाव्यं च तेनामर्शनीयेन। तत्रैव काले 'नेदं रजतं हि अभूत' इति हि उत्तरः परामर्शो, न तु उदितप्रत्यस्तमितायां शतह्लदायामिव इदानीमेव 'इदं न' इति विमर्शः; ततो यावता पूर्णेन रूपेण प्रख्यातव्यं विमर्शपर्यन्तं

सकता, इस हेतु से कार्य भिन्न नहीं हो सकता, स्वरूप भेद से वह अन्यथा दिखता है। अर्थस्वरूप अर्थक्रियाकारिता नहीं हो सकती, यह हमने पूर्व में भी कहा है एवं आगे भी बहुत प्रकार से कहेंगे। प्रत्यवमर्श के बल से एकमात्र संविद्रूप ही बाहर और भीतर दिख पड़ता है—यही सत्य है ॥ १२ ॥

क्या तब विमर्श के बल से ही वस्तुओं में भेद और अभेद की व्यवस्था होती है, यह यदि माना जाय तो फिर इस समय तीनों लोकों में भ्रान्ति की कथा ही समाप्त हो जायेगी। शुक्ति में भी सत्यरूप से रजत ही भासित होगा; क्योंकि यह रजत है—ऐसा ही परामर्श होता है; तब तो फिर कहीं पर भी भ्रान्ति नहीं होगी, अतः भ्रान्ति के न रहने पर बाधा की उपपत्ति नहीं हो सकती, फिर क्यों—कहा कि प्रमा वस्तु में बाधक नहीं होती इत्यादि; व्यभिचार के अभाव में 'अबाधिता' इस विशेषण का व्यवच्छेदक कुछ भी नहीं होगा—इस शङ्का को दूर करते हैं—

रजत का आभास होने पर भी शुक्तिका में रजत की स्थिति नहीं होती; क्योंकि आगे चल करके उसका बाध हो जाता है। उपाधिदेश में न मिलने के कारण जैसे आकाश में 'द्विचन्द्रः' दो चन्द्रमा का बाध हो जाता है वैसा ही उसका भी बाध हो जाता है ॥ १३ ॥

यह रजत स्थिर है—ऐसा सभी प्रमाताओं को साधरण अर्थक्रिया की योग्यता प्रतीत होती है। 'इदम्' अंश में रजतादि अंश मिला देने पर आभास एवं विमर्श के बल से तो मिथ्यात्व नहीं झलकता, किन्तु उत्तरकाल में यह रजत नहीं है इसका बाध हो जाता है, प्रमाता का यह स्थिर जो विमर्श होगा, वह पूर्वकाल विमर्श काल के अनुरूप नहीं होता; क्योंकि स्वर्णकार ने यह कह दिया है कि यह रजत नहीं है, जैसे विद्युत् चमकती है, उसी प्रकार यह विमर्श सहसा नहीं हुआ है; यह विमर्श बहुत सोच-समझ कर भली भाँति खण्डन करने योग्य है। जब तक यह

तावत् न प्रख्याति,—इत्यपूर्णख्यातिरूपा अख्यातिरेव भ्रान्तितत्त्वम्। तद्वशेन असद्विपरीतानिर्वाच्यादिख्यातयोऽपि उच्यन्ताम्।

ननु सत्यरूप्यज्ञानमपि अपूर्णख्यातिः ततस्तर्हि किम् ?। इदम् अतः सर्वं भ्रान्तिः,—इत्यागच्छेत्। दिष्ट्या दृष्टिरुन्मिमीलिषति आयुष्मतः, मायापदं हि सर्वं भ्रान्तिः, तत्रापि तु स्वप्ने स्वप्न इव गण्डे स्फोट अपरेयं भ्रान्तिरुच्यते, अनुवृत्त्युचितस्यापि विमर्शस्यास्थैर्यात्। अतश्च पृथक् इदन्ताद्याभासेषु न काचन भ्रान्तिः, मेलनांशे तु विमर्शानुवृत्तिनिर्मूलनं विमर्शोदयकालादेव आरभ्य बाधकेन क्रियते, इति तत्रैव भ्रान्तिभावः,—इति सिद्धम्। रजतस्य शुक्तिकया सह यद्यपि एको विमर्श, तथापि शुक्तौ रजतस्य तेन ज्ञानेन या दत्ता स्थितिः 'इदं रजतम्' इति, सा न; यत उपाधिरूपो यो देशः 'अत्र रजतम्' इति रजतच्छायाम् आत्मनोपरञ्जयन् शुक्तिदेशः, तस्यासंवादात् सम्यग्विमर्शनानुवृत्त्याभासनं संवादनं, 'वदिः' अत्र भासनविषयः, तस्याभावात् कारणात्।

नन्वेवं भवतु शुक्तिकारजते, द्विचन्द्रज्ञाने तु 'द्वौ चन्द्रौ' इत्याभासे शुक्तिकयेव मेलनं न केनचित्साकमाभासते, यत्र बाधः स्यात्; एकाभासांशे च न बाधः,—इत्युक्तं भवतैव। क एतदाह–मेलनं न केनचित्सह—इति। एवं हि सति स्वालक्षण्येन नियतदेशकालतया कथमाभासः; ? तद्देशकालाभ्यां सह तत्रापि अस्ति मेलनाभासो यद्विमर्शोऽनुविवृत्सुर्निरूप्यते, द्वित्वाभासचन्द्राभासयोरपि मेलनाभासे विमर्शानुवृत्तिव्यावर्तनं वाक्यम्। तदेतदाह—द्विरूपे चन्द्रेऽपि, न केवलं रजत एव। 'नभः' इति देशविशेषः कश्चित्। 'अन्यथा' इति द्विचन्द्रावरुद्धो योऽनवमृष्टः स न तथा,—इति

विमर्श रहेगा तब तक खण्डित नहीं होगा, इसीलिए यह पूर्ण ख्यातिरूप अख्याति ही भ्रान्तिता है। इसी रूप में असत्, विपरीत, अनिर्वाच्य आदि ख्यातियाँ भी समझना चाहिए।

अब शङ्का करते हैं कि सत्यरूप से रजत का ज्ञान है, वह भा एक प्रकार से अख्याति ही है। इससे फिर क्या होगा ? तब तो, सब ज्ञान को भ्रान्ति ही कहना पड़ेगा। भाग्य से नींद टूट जाने पर जब आप की दृष्टि खुलेगी तब तो उसे भ्रान्ति ही कहनी होगी; क्योंकि माया के आश्रय होने से सब भ्रान्ति ही है; जैसे गाल पर के फोड़े के समान स्वप्न में ही स्वप्न की तरह यह दूसरी भ्रान्ति हो गयी; क्योंकि उचित अनुवृत्ति का भी विमर्श अस्थिर रहता है। इसलिए इदन्तादि के पृथक् आभासों में कोई भ्रान्ति नहीं है, मिलाने पर तो विमर्श की अनुवृत्ति का निर्मूलन होने के कारण विमर्श के उदयकाल से ही लेकर बाधक होने तक भ्रान्ति वहाँ पर रहती है—यह सिद्ध होता है। रजत का शुक्ति के साथ विमर्श होने पर शुक्ति में भी तो रजत का ज्ञान आता है 'इदं रजतम्' यह रजत है—ऐसा कहने से वहाँ पर देश की जो उपाधि है 'अत्र रजतम्' यहाँ रजत है; इस प्रकार से रजत की छाया को शुक्तिदेश से समन्वय करने का विसंवाद होने से विमर्श की अनुवृत्ति नहीं होती। यहाँ पर 'वद्' धातु का भासन विषय है, उसका अभाव कारण है।

ऐसा भले ही हो, किन्तु शुक्ति में रजत का और दो चन्द्रमा के ज्ञान में 'दौ चन्द्रौ' दो चन्द्रमा का किसी प्रकार से भी भान नहीं होता, जिससे वह बाध हो सके और यह नियम है कि एक के आभास में बाध नहीं होता। इस बात को आपने ही कहा है। इस स्थिति में स्वालक्षण्य से नियत देश-काल के कारण कैसे आभास हो सकता है ? उस देश-काल के साथ वहाँ पर भी मिलने का आभास रहता ही है; जो कि आभास की अनुवृत्ति करनेवाला उसका निरूपण करता है, इस प्रकार से द्वित्वाभास और चन्द्राभास के भी मेलनाभास में विमर्श अनुवृत्ति का व्यावर्तन

**बाधकेन उन्मूलितप्राच्यविमर्शानुवृत्तिकः क्रियते,—इति। एवमाभासस्तन्मेलनं च नियमानुप्राणितम्,—इत्येतावदेव प्रमेयम्। एतान्येव आगमे तत्त्वानि वक्ष्यन्ते। वस्तु तत्त्वं प्रमेयम्—इति पर्यायः। तथा च काठिन्याभास इति पृथिवी, लोहिताभास इति रूपं तेजश्च, मेलनाभासो रजः, सन्निवेशस्तु नियतिरूपः, नियतिर्हि नियमः, स च अभावप्राणोऽभावस्फुरणमेव च पृथिव्याभासस्य विचित्रतया चकासत् पृथुबुध्नोदराकारता, भेदाभासश्च माया, तत्पृष्ठे सत्यप्रकाशाभासश्च शिवतत्त्वम्,—इत्यास्तां तावत्। अग्रे भविष्यति एतत्। सर्वथा तावदत्र प्रमेये भगवत एव भेदने च अभेदने च स्वातन्त्र्यं, घटगताभासभेदाभेददृष्टिरेव च परमार्थाद्वयदृष्टिप्रवेशे उपायः समवलम्बनीयः, न तु व्यवहारोऽपि अयं परमेश्वरस्वरूपानुप्रवेशविरोधी,—इति प्रतिपादितम्॥ १३॥**

**एतदेव स्फुटयन् सकलप्रमेयसिद्धिः परमेश्वर एव आयत्ता,—इति निरूपयति—**

गुणैः शब्दादिभिर्भेदो जात्यादिभिरभिन्नता।
भावानामित्थमेकत्र प्रमातर्युपपद्यते॥ १४॥

**इह अनुवृत्तं व्यावृत्तं च चकासद्वस्तु कतरेण वपुषा न सत्यमुच्यताम् उभयत्रापि बाधकाभावात्, सत्यतो हि यदि बाधक एव एकतरस्य स्यात् तत्तदुदये स एव भागः पुनरुन्मज्जनसहिष्णुतारहितो विद्युद्विलायं विलीयेत; न चैवम् अत एव भेदाभेदयोर्विरोधं दुःसमर्थमभिमन्य-**
होता है। इसीलिए कहा गया है कि दो चन्द्रमा में भी होता है, केवल शुक्ति रजत में ही नहीं होता। 'नभः' देशविशेष का नाम है। अन्यथा न मानोगे तो दो चन्द्रमा से अवरुद्ध नभ का विमर्श नहीं होगा, इस प्रकार बाधक से पूर्व का विमर्श उन्मिलित नहीं होता एवं आभास और उसका मेलन नियम से अनुप्राणित नहीं होगा, यही प्रमेय है और इसी को आगम में तत्त्व मानते हैं। एक ही अर्थ का बोधक हो और भिन्न शब्द हो, उसे पर्यायवाची कहा जाता है। जिसमें कठिनता का आभास हो वही पृथ्वी है, जिसमें रक्तरूप हो वह तेज है, तत्त्वों के आपस में मिल जाने पर रज बन जाता है, ठीक-ठीक नियम से रह जाने को नियति कहते हैं और वह दूसरे के अभाव के साथ स्वयं स्फुरण को अभाव कहते हैं। जैसे—घट में पृथु = बीच में बड़ा सा गोला होना ऊपर की ओर छोटा सा मुख होना और उसके पीछे सत्य का प्रकाश होना शिव तत्त्व कहलाता है और यही भेदाभास माया भी है, यहाँ पर इतना कहना ही पर्याप्त है। आगे इसकी विशेषता बतलायेंगे। उन सभी प्रमेयों के अभेद और भेद में भगवान् का ही स्वातन्त्र्य रहता है और घट में होनेवाले आभास के भेद एवं अभेद दृष्टि परमार्थ दृष्टि के प्रवेश में उपाय होती है; क्योंकि परमेश्वर के स्वरूप के अनुरूप यह व्यवहार विरोधी पड़ता है। इस विषय में हमने प्रतिपादन कर दिया है॥ १३॥

इसी को स्पष्ट करते हुए सारे प्रमेयों की सिद्धि परमेश्वर में ही होती है—इस बात का निरूपण करते हैं—

गुणों से एवं शब्दादि से भेद होता है और जाति आदि से अभेद होता है—इस प्रकार एक ही प्रमाता में पदार्थों की स्थिति रहती है॥ १४॥

यहाँ पर सामान्य और विशेषरूप से प्रकाशित होता हुआ पदार्थ किस शरीर से सत्य नहीं है, कहिये—दोनों जगह कोई बाधक तो नहीं है, ठीक है, यदि एक का बाधक एक होता तो उसके उदय होने पर वही भाग विद्युत् के समान विलीन हो जायेगा; किन्तु ऐसा नहीं होता।

मानैरेकैरविद्यात्वेन अनिर्वाच्यत्वम्, अपरैश्च आभासलग्नतया सांवृत्वम् अभिदधद्भिः आत्मा परश्च वञ्चितः। संवेदनविश्रान्तं तु द्वयमपि भाति संवेदनस्य स्वातन्त्र्यात्। सर्वस्य तिरश्चोऽपि एतत्। संवेदनसिद्धं—यत् संविदन्तर्विश्रान्तमेकतामापाद्यमानं जलज्वलनपि अविरुद्धं, तत एव उक्तं—'अत एव यथाभीष्टसमुल्लेखा·····।' (१।६।११) इति। अतश्च गुणैरुपाधिरूपैर्विशेषाधायितया विवक्षितैः शब्दादिभिर्वा दण्डादिभिरपि वा यो भेदो जातिवशात् सादृश्यात् भेदाग्रहणाद्वा; यश्च अभेदो भावानाम् इत्थमित्युक्तनीत्या 'क्रियासम्बन्ध' ( २।२।१ ) इत्यतः प्रभृति निरूपितः, स एकत्र प्रमातरि सकलप्रमाप्रमाणसंयोजनवियोजनादिविचित्रासंख्यकृत्यप्रपञ्चोचितस्वातन्त्र्ये भगवत्यस्मदीयहृदयैकान्तशायिनि शिवशब्दव्यपदेश्ये सति उपपद्यते, नान्यथा। विशेषणान्येव च अत एव भेद और अभेद का विरोध दुःसमर्थ मानते हुए कुछ लोगों ने उसी को अनिर्वाच्या अविद्या बताया है और दूसरों ने आभास के साथ होने से वह ठीक है—ऐसा कहते हुए अपने आप को और दूसरे को ठगते हैं। हमारे सिद्धान्त में तो दोनों संभव है; क्योंकि संवेदन स्वतन्त्र होता है। सब को यहाँ तक कि पशु पक्षिओं में भी अपना स्वसंवेदन सिद्ध है—वह जल और अग्नि के समान एक ही संवेदन में अविरुद्ध रहता है, इसी कारण कहा है कि—'अत एव यथाभीष्टसमुल्लेखा······।' ( १-६-११ )

इसीलिए उपाधिरूप गुणों से विशेषता रखनेवाले कहे जाते हैं; इत्यादि शब्दों से या दण्डादि से जो भेद होता है वह जाति वशात् या सादृश्य से भेद का ग्रहण न होने से पदार्थभावों का अभेद हो जाता है—ऐसा कहा गया है। "क्रिया सम्बन्धे" ( २-२-१ ) यहाँ से लेकर आगे तक इसका निरूपण हुआ है। एक ही प्रमाता में संयोजन एवं वियोजन आदि असंख्य विचित्र प्रपञ्च से युक्त हम लोगों के हृदय रखनेवाले शिव शब्द के वाच्य भगवान् में ही संपूर्ण प्रमाण और प्रमेय उपपन्न होते हैं, दूसरे प्रकार से नहीं। विशेषण ही भेदक हो जाते हैं तो फिर दूसरे

---

१. नित्यद्रव्येषु सर्वेषु परस्परसधर्मेषु। प्रत्येकमनुवर्तन्ते विशेषा भेदहेतवः॥

वैशेषिक लोग विशेष पदार्थ की सिद्धि के लिए इस प्रकार कहते हैं—जैसे हम लोगों की तुल्य आकृति क्रिया अवयव संयोगवाले गौ इत्यादि पदार्थों में अश्व आदि से भिन्न प्रकार की अनुभूतियाँ देखी जाती हैं। जैसे 'गौः शुक्लः शीघ्रा गतिः पीनः ककुद्मान् महाघटः' इस प्रकार हम लोगों से विशिष्ट ऊर्ध्वरेतस्क योगी लोगों की तुल्य आकृति गुण क्रियावाले परमाणु मुक्तात्मा और मन, इनमें यह परमाणु है वह परमाणु नहीं है; इस प्रकार भिन्न-भिन्न विषयों में जो विलक्षण-विलक्षण अनुभूतियाँ होती हैं और एक परमाणु के देखने बाद कल्प बीतने पर भी उस परमाणु को देख करके वही यह परमाणु है जिसको मैंने एक कल्प पहले देखा था —ऐसी अनुभूतियाँ होती हैं इसमें दूसरे निमित्त के संभव न होने के कारण प्रत्येक नित्य पदार्थों में अलग-अलग विशेष पदार्थ रहते हैं—ऐसा मानना आवश्यक है। यह मानना संभव नहीं है कि सर्वज्ञ योगियों को विशेष पदार्थ के बिना ही वैसी प्रतीतियाँ संभव हो जायेंगी, जबकि विशेष पदार्थ के बिना भिन्नत्व असिद्ध होने के कारण, अभिन्नों में भिन्नत्व प्रतीतियाँ मिथ्या हो जायेंगी। उन विशेषों को विशेष इसलिए कहा जाता है कि विशेष का भेदक होता है, यह अपने आश्रय को भिन्न वस्तुओं से भिन्न कर देता है।

अतः नित्य पदार्थों का परस्पर भेद उत्पन्न हो इसके लिए अतिरिक्त विशेष पदार्थ को स्वीकार करने की आवश्यकता नहीं है 'इस परमाणु से वह द्वयणुक सम्पन्न नहीं हुआ था इसी कारण ये दोनों

भेदकानि,—इति किमन्त्यैरन्यैर्विशेषैः; अयं च परमाणुर्य एतद्देशादिविशिष्टघटारम्भणकाले पश्चात्तनसंघटितद्व्यणुकारम्भकाले पूर्वं मिलितः' अयं स आत्मा, यः पुरा स्वर्गसदने सुरयोषितमिमामित्थं परिरब्धवान्,—इति इयतैव योगिसर्वज्ञादीनां सिद्धः परमाण्वात्मादिषु भेदावभासः,—इत्यलमवान्तरेण । सिद्धं तावात् भेदाभेदरूपं प्रमेयतत्त्वम् एकप्रमातृविश्रान्त्या निःशङ्कतां श्रयति,—इति ॥ १४ ॥

ननु एवंभूतो यद्ययं प्रमाता तत्रैव तर्हि प्रमाणोपान्यासे प्रयतनीयं न प्रमेये, यदाह 'प्रधाने हि यत्नः फलवान्' इति । तदेतदाशङ्क्य प्रथमोपक्षिप्तमेव प्रमेयं स्मारयत्याचार्यः । तथा हि

विषयों की क्या आवश्यकता दिखायी पड़ती है । यह परमाणु इस देश से संयुक्त घटारम्भ काल में जो पीछे होनेवाले द्व्यणुक के आरम्भ काल में पहले से मिला हुआ आत्मा है । इससे पहले स्वर्ग में सुर-सुन्दरियों का आलिङ्गन किया था, इस प्रकार इतने से ही योगी की सर्वज्ञता की सिद्धि हो जाती है और परमाणु आत्मा आदि में भेद का अवभास सिद्ध हो जाता है, इसीलिए अवान्तर भेद की कल्पना करने की कोई आवश्यकता नहीं है; क्योंकि प्रकृत प्रसंग में अनुपयोगी सिद्ध होता है ।

इसलिए यह बात सिद्ध हुई कि भेदरूप एवं अभेदरूप प्रमेय तत्त्व एक ही प्रमाता में निःशङ्क होकर विश्रान्त रहते हैं ॥ १४ ॥

अच्छा तो, इस प्रकार से यदि यह प्रमाता उस विश्रान्ति के स्थान में भेद एवं अभेदरूप से निःशङ्क विश्रान्त होकर रहता है तो प्रमाण के रखने में ही प्रयत्न करना ठीक माना जायेगा प्रमेय में नहीं होना चाहिए; जब कि इस विषय में कहा भी गया है 'प्रधाने हि यत्नः फलवान्'

---

परमाणु परस्पर भिन्न हैं, इस आत्मा ने उस रमणी का आलिङ्गन किया था, उस आत्मा ने नहीं । अतः ये दोनों आत्मा परस्पर भिन्न हैं जिससे कि नित्य पदार्थों में भी परस्पर भिन्नता सिद्ध हो जाती है ।

इन विशेषों को अन्त्य भी कहा जाता है; क्योंकि ये ही भेदकों में अन्तिम हैं, इनके ऊपर दूसरा कोई भेदक नहीं होता, जबकि ये भिन्न करने के लिए ही सिद्ध हैं और स्वतः भिन्न हुए बिना दूसरे को भिन्न नहीं किया जाता है । अतः ये स्वतः ही भिन्न-भिन्न रूपों में सिद्ध होते हैं । अन्त्य कहने का दूसरा कारण यह है कि जिन नित्य द्रव्यों का अन्य सभी द्रव्यों के नाश होने पर भी इनका विनाश नहीं होता है । अतः संसार के अन्त अनन्त कोटि है उनमें ये विशेष रहते हैं एवं तृतीय कारण यह बताया गया है कि उन नित्य द्रव्यों में इन विशेषरूपी विशेषणों को मान लेने पर किसी दूसरे विशेषणों को मानने की आवश्यकता नहीं है, यह विशेष ही उन नित्य द्रव्यों के अन्तिम विशेषण है । चतुर्थ कारण यह है कि जब मुक्त दशा में अन्य सभी विशेष गुण नहीं रहते हैं उस दशा में मुक्तात्मा एवं मन में यह विशेष रहता है, अन्य सभी गुण विशेष गुण क्रमशः ध्वस्त होते-होते समाप्त हो गये, अन्ततः यह विशेष पदार्थ रह गया, इसी कारण को लेकर भी विशेष पदार्थ को अन्त्य कहा जाता है यह पञ्चम कारण है ।

घट भिन्न है कपाल के भिन्न होने से ऐसा प्रवाह निरन्तर चलता गया; चलते-चलते द्व्यणुक भिन्न है परमाणु के भेद से, उस परमाणु से भिन्न है विशेषात् इस प्रकार विशेष पदार्थ तक भेद चलता गया, इसके आगे प्रवाह अवरुद्ध हो जाता है, इसी विशेष पदार्थ पर उस प्रवाह का अन्त हो गया, इसलिए उस प्रवाह के अन्त में 'अन्ते भव' अन्त में होनेवाला होने के कारण विशेष पदार्थ को अन्त्य कहा गया है ।

'अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ।' ( १।१।२ ) इति यद्वस्तु तदेवेदानीं ज्ञाते प्रमाणस्वरूपे परमेश्वरस्वरूपे च निर्वाहणार्हम्, एवंभूतं हि प्रमाणं तदेवंभूते हि भगवति कथं क्रमताम्, इति । तदेतत् स्फुटयितुमाह—

विश्ववैचित्र्यचित्रस्य समभित्तितलोपमे ।
विरुद्धाभावसंस्पर्शे परमार्थसतीश्वरे ।। १५ ।।
प्रमातरि पुराणे तु सर्वदा भातविग्रहे ।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि ।। १६ ।।

परिमितप्रमातृलग्नो नवनवाभासः प्रमेयोन्मुखः प्रमाणम्,—इत्युक्तम् । तत्र प्रकाशवपुषि प्रकाशमात्रस्वभावे पूर्वसिद्धे कः प्रमाणस्योपयोगः सम्भावना वा । तथा च पूर्वसिद्धे प्रमातरि सति तल्लग्नप्रकाशान्तर्भूतविमर्शमयीम् अभूतपूर्वां प्रमेयस्य सिद्धिं वितरति प्रमाणम् । प्रमातुश्चादिसिद्धस्य किंलग्ना सिद्धिरस्तु । विश्ववैचित्र्यं हि तत्र परमेश्वरे प्रकाशैकात्मनि सति भाति यथा चित्रं भित्तौ यदि हि नीलपीतादिकं पृथगेव परामृश्यते तदा स्वात्मविश्रान्तेषु तेषु तथा वा अन्योन्यविषये जडान्धबधिरकल्पानि ज्ञानानि स्वविषयमात्रनिष्ठितानि, विकल्पाश्च तदनुसारेण भवन्तः तथैव,—इति 'चित्रम् इदम्' इति कथंकारं प्रतिपत्तिः । एकत्र तु निम्नोन्नतादिरहिते भित्तितले रेखाविभक्तनिम्नोन्नतादिविभागजुषि 'गम्भीरनाभिरुन्नतस्तनीयम्' इति चित्रावभासो

अर्थात् प्रधान कार्य में ही किया हुआ यत्न फलवाला होता है। इस पर आशङ्का कर सर्वप्रथम आये हुए प्रमेय को आचार्य स्मरण कराते हैं। जैसा कि 'अजडात्मा निषेधं वा सिद्धं वा विदधीत कः' । ( १-१-२ ) 'चेतनरूप आत्मा का निषेध या सिद्धि कौन कर सकता है ?—वह तो स्वयं सिद्ध ही है' । यह सिद्ध पदार्थ-वस्तु उस परमेश्वर के स्वरूप का ज्ञान होने पर निर्वाह के लिए इस प्रकार का प्रमाण ऐसे सिद्ध भगवान् में कैसे स्थान प्राप्त कर सकता है, इसी बात को स्पष्ट करते हैं—

परमार्थ सत् ईश्वर के प्राक्तन प्रमाता होने पर जिसका सर्वदा प्रकाश रहता है और जिस विश्व के वैचित्र्य-चित्र को अपने में ही चित्रित करता है एवं विरोध और अविरोधरूप से सभी का जिसमें भास होता है—ऐसे ईश्वर में सभी प्रमाओं का मान होता रहता है। फिर उसमें किस प्रमाण का अवभास हो सकता है ।। १५–१६ ।।

परिमित प्रमाता में होनेवाला नया-नया अवभासितरूप प्रमेय में उन्मुख रहना प्रमाण कहा जाता है—यह हम कह चुके हैं। उस पूर्वसिद्ध प्रकाश शरीर परमेश्वर में प्रमाण का उपयोग या उसकी संभावना कैसे हो सकती है ? और पूर्वसिद्ध प्रमाता के रहते-रहते उसमें रहनेवाले प्रकाश के अन्तर्भूत विमर्शमय अभूतपूर्व प्रमेय की सिद्धि प्रमाण करता है। इस प्रकार पहले से ही सिद्ध प्रमाता को वह कैसे सिद्ध कर सकता है। सारे विश्व की विचित्रता प्रकाशरूप परमेश्वर में ही भासती है—जैसे चित्र पर कामिनियों का चित्र भासता है। इसीसे सिद्ध की सिद्धि क्या हो सकती है ? यदि नील-पीतादि पृथक्-पृथद्रूप से परामृष्ट होते हैं तो अपने में विश्रान्त हो जाने पर परस्पर अन्ध बधिर के सदृश अपने में ही होनेवाले यह चित्र है—ऐसा ज्ञान कैसे संभव हो सकता है ? निम्न-उन्नत आदि से रहित समतल भित्ति में रेखा से अलग किये गये निम्न-उन्नत

युक्तः, तद्वत् एकप्रकाशभित्तिलग्नत्वेन वैचित्र्यात्मकभेदोपपत्तिः इति भावभेदग्रहणप्रकाशभित्ते-रनपायिनीं स्वप्रकाशतामाह। तत्र स्वप्रकाशे किं प्रमाणेन? अथोच्यते पूर्वमस्य प्रकाशो न भवति, तर्हि स एव नास्ति,—इति स्यात् प्रकाशमात्ररूपत्वात् तस्य। न च अस्य नास्ति,—इत्य-भावेन स्पर्श उपपन्नो, यतो हि असावेव परमार्थतः सन् प्रकाशस्यैव सत्त्वात्, सतश्च असद्रूपत्वा-योगात्। अथ उच्यते—ईश्वरता तस्याप्रमिता प्रमास्यते तदपि न, यतो हि असौ प्रमातृत्वेन चेत् नाचकास्यत् कस्यायमुद्यमः, चकास्ति चेत् तर्हि प्रमातृतैव ईश्वरता, तदाह 'ईश्वरे प्रमातरि सर्वदा भातविग्रहे' इति। विशेषेण गृह्यते इति विग्रहोऽसाधारणं स्वरूपम्, तत एव स्वतन्त्रप्रकाश-नेन यः कालव्यवहारः सोऽत्र नास्ति,—इति 'पुराणे' इत्युक्तम्। तत्र किं प्रमाणं, कुतः प्रयोजनात्प्रमाणं, कस्तत्र प्रमाणस्योपयोगः,—इति, तत्र च किं प्रमाणं न किञ्चित् उपपत्त्या घटते इत्यर्थः। यतः प्रमाणं नामाभिनवाभासरूपं प्रमातरि प्रमितिलक्षणां विश्रान्तिं विदधत् प्रमाणं भवति, प्रमाता चाविच्छिन्नाभासः सर्वाश्च प्रमितीः स्वात्मनि अन्तर्मुखरूपे भजते। तत् तस्मिन् कथमभिनव आभासस्तत्प्रमितिश्च कुत्र विश्राम्यतु। तस्मात् देहप्राणपुर्यष्टकशून्यप्राय एव प्रमातरि प्रमाणमुच्यताम्। तत्रापि च वेद्यांशे यदि नाम, न तु कथंचित् संविदंशे, तत्रापि

विभागवाली भूमि में गंभीर नाभि ऊपर की ओर उठे हुए स्तन इत्यादि का चित्र में आभास होता है, उसी प्रकार एक प्रकाशवाले अर्थात् समान भित्तिवाले चित्र में ही भेदों की उपपत्ति हो सकती है। उसी को भाव-भेद ग्रहण करनेवाली भित्ति का कभी नहीं विनष्ट होनेवाला प्रकाश कहा जाता है। स्वप्रकाश में प्रमाण का क्या प्रयोजन है? यदि कहते हो कि पूर्व में इसका प्रकाश नहीं होता तो वही नहीं रहता है, इसीलिए मानना पड़ेगा कि प्रकाशरूप होने के कारण सर्वदा रहता ही है, उसका भासन नहीं रहता है—ऐसा जब आप बोलेंगे तो अभाव से ही ईश्वर का स्पर्श हो जाता है; वस्तुतः वही परमार्थ प्रकाश की सत्ता भी है और सत्य का एवं असत्य का योग नहीं बैठ सकता। यदि कहो कि उसकी ईश्वरता अपरिमित है, कभी उसका परिमाण हो जायेगा तो यह भी बात नहीं है; क्योंकि उसको यदि प्रमाता मान लेंगे तो यह किसका उद्यम है, इसका पता लगाना कठिन हो जायेगा। यदि किसी प्रकार बोध हो भी गया—तो भी, प्रमाता को ही ईश्वरता कहना पड़ेगा। इस बात को लेकर कहते हैं कि 'ईश्वरे प्रमातरि सर्वदा भातविग्रहे' यदि प्रमाता है, तो सर्वदा उसका प्रकाश होना चाहिए। विग्रह शब्द का यही अर्थ है कि जिसका स्वरूप विशेषरूप से गृहीत होता हो और उसीको विग्रह भी कहना चाहिए। इसीलिए स्वतन्त्र प्रकाश होने के कारण अभाव स्पर्श का अयोग्य प्रवेश जो काल का व्यवहार है—वह यहाँ पर नहीं हैं, इसीलिए 'पुराणे' शब्द आया है। उसमें प्रमाण क्या है? किस प्रमाण से प्रयोजन है, प्रमाण का कौन सा वहाँ पर उपयोग देखा जाता है? और वहाँ पर प्रमाण की कोई उपपत्ति नहीं बैठ रही है। जब कि प्रमाण उसी का नाम है जो नूतन अभिनव आभासरूप प्रमाता में प्रमारूप विश्रान्ति को पाते हुए प्रमाता होता है और प्रमाता निरन्तर आभास से युक्त रहता है सब प्रमाएँ अपने आप उसमें अन्तर्मुख होकर रहती है। वह उस प्रमाता में नया आभास या प्रमा कैसे कहाँ विश्राम लेगी? इसीलिए देह, प्राण, मन, बुद्धि, अहंकार और पञ्च-तन्मात्राएँ ( शब्दादि ) इन सबों से शून्य हो प्राण प्रमाता में प्रमाण रहता है—ऐसा कहना चाहिए वह भी विद्यांश में ही विश्राम लेगा किसी प्रकार भी ज्ञानांश में नहीं लेगा और विषयके

भासने 'सादाख्यं' सदाख्यायां भवम्; यतः प्रभृति सदिति प्रख्या, सदाख्यायाश्च सदाशिवशब्द-रूपाया इदं वाच्यं तत्त्वम्। सृष्टिक्रमोपदेशादौ प्रथममुचितं तत्सादाख्यं तत्त्वम्। 'बहिर्भावस्य' क्रियाशक्तिमयस्य 'परत्वे' उद्रेक.भासे सति 'पारमेश्वरं' परमेश्वरशब्दवाच्यमीश्वरतत्त्वं नाम। ततश्च सादाख्यस्य पश्चादुचितावभासनम्। एतदुक्तं भवति—इह तस्य भावस्तत्त्वम्,—इति भिन्नानां वर्गाणां वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्त्वं, यथा गिरिवृक्षपुरप्रभृतीनां

तत्त्व में होनेवाले भावतत्त्व को सादाख्य तत्त्व से कहा जाता है; क्योंकि इन सभी पदार्थों की सत्ता सदा प्रतिज्ञापन होती है इसी कारण वे सभी तत्त्व सदाशिव शब्द का वाच्य हो जाते हैं। इदन्ता के उन्मेष अवस्था में भी इनकी शिवरूपता सदा बनी रहती है, चाहे फिर स्फुट होकर बाहर में अभिव्यक्त हो गये हो इससे क्या होता है? इसी कारण 'सदा' शब्द से कहा गया है। सृष्टि क्रम के उपदेशादि देने में प्रथम तत्त्व तो सदाशिव ही रहता है—ऐसा कहना युक्तियुक्त बैठता भी है। 'बहिर्भावस्य' इस वाक्य से द्योतित होता है कि 'इदम्' अंश क्रिया-शक्ति से युक्त होकर बाहर की ओर प्रस्फुट होता है; क्योंकि इसमें क्रिया-शक्ति की प्रधानता है—ऐसा अवभासन होने पर 'पारमेश्वरं' परमेश्वर शब्द का वाच्य ईश्वर तत्त्व कहलाता है अर्थात् बाहर में तत्त्व की अभिव्यक्ति होने पर ईश्वर तत्त्व प्रधान हो जाता है। इसलिए सदाशिव तत्त्व के बाद ठीक भासित होनेवाला ईश्वर तत्त्व है, यह कहा जाता है कि उसका भाव रहता है और उसका रहना ही तत्त्व माना जाता है, भिन्न-भिन्न वर्गों के वर्गीकरण में जो निमित्त है, जो कि एक ही में अवियुक्तरूप से मिला हुआ भासता है वस्तुतः उसीका नाम तत्त्व है। जैसा कि पर्वत, वृक्ष, नगर

१. इदंभाव के प्रतिबोध करने की इच्छा सदाशिव तत्त्व व सादाख्य तत्त्व में रहती है। इस सदाशिव तत्त्व की अवस्था में इच्छा का प्राधान्य रहता है। इस अवस्था में 'अहम्' 'मैं हूँ' ऐसा प्रतिज्ञापन होता है इसीलिए यह सादाख्य तत्त्व कहा जाता है। सद् शब्द का अर्थ है होना तथा होने में इदंभाव की प्रतीति होती है इस अवस्था में 'अहम्-इदम्' 'मैं यह हूँ' ऐसा निश्चित एक अनुभव हृदय में होता है किन्तु इदमंश अभी अस्फुट दशा में पड़ा हुआ है। 'अहम्' में इसकी प्रधानता बनी हुई है। सदाशिव में उन्मेष का अभाव है किन्तु निमेष अवस्थावाले सदाशिव तत्त्व है, इस विषय में कहा भी गया है कि 'ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः' किन्तु इदम् अंश को अपना ही अंश मानता है। प्रधानता तो अहम् की रहती है जैसे कुंभकार के मन में छोटे-बड़े आकार-प्रकारवाले अनेक प्रकार के मृत्पात्र निर्माण करते समय एक अस्फुट धुँधली प्राथमिक अवस्था विशेष रहती है उसी प्रकार सदाशिव तत्त्व में भी विश्व अस्फुट अवस्था में अवस्थित रहता है।

२. जिसका मतङ्ग संहिता में भी उल्लेख किया गया है—

तत्त्वं यद्वस्तुरूपं स्यात्स्वधर्मप्रकटात्मकम्।
तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शने॥
यदच्युतं स्वकादृवृत्तात्ततं चात्मवशं गतम्।
ततमन्येन नो तस्मात्तत्त्वं तत्त्वसंततौ॥

जो अपने धर्म को प्रकट करनेवाला पदार्थरूप तत्त्व है वही आम्नाय-वेद में प्रत्यक्ष स्फुटरूप से व्यक्त वस्तु तत्त्व कहलाता है। जो अपने वृत्त से च्युत नहीं होता है तथा अपने में प्रतिष्ठित भी है और किसी अन्य से प्रकाशित नहीं है, वही तत्त्वसंतति में तत्त्व कहलाता है।

**नदीसरःसागरादीनां च पृथिवीरूपत्वमब्रूपत्वं चेति। ततश्च शुद्धचैतन्यवर्गो यो मन्त्रमहेश्वराख्यः, तस्य प्रथमसृष्टावस्माकमन्तःकरणैकवेद्यमिव ध्यामलप्रायमुन्मीलितमात्रचित्रकल्पं यद्भावचक्रं, संहारे च ध्वंसोन्मुखतया तथाभूतमेव चकास्ति प्रतिबिम्बप्रायतया, तस्य चैतन्यवर्गस्य तादृशि भावराशौ तथाप्रथनं नाम यच्चिद्विशेषत्वं तत्सदाशिवतत्त्वम्। मन्त्रेश्वरादिरूपस्य तु चैतन्यराशेः स्फुटीभूतमस्मद्बहिष्करणसरणिसंप्राप्तभाववर्गप्रतिमं विश्वं प्रतिबिम्बतया भाति, तस्य तु तत् तथाप्रथनमीश्वरतत्त्वम्। यस्तु सदाशिवभट्टारक ईश्वरभट्टारकश्च ध्येयोपास्यादिरूपतया स**

इत्यादिकों का तथा सरिता, सरोवर, सागर आदि की पृथिवीरूपता और जलरूपता होना। इसलिए जो शुद्ध चैतन्यवर्ग मन्त्र महेश्वर है, उसकी पहले-पहल सृष्टि हम लोगों के अन्तःकरण द्वारा वेद्य के जैसी अस्फुटरूप में, चित्रकार के मन में चित्र खींचने के पूर्व रूपरेखा धुँधली-सी रहती है, उसी प्रकार सदाशिव तत्त्व में ध्यामल अर्थात् हलकी सी धुँधली रूपरेखा अव्यक्तरूप से रहती है। संहार काल में भी पदार्थों की ध्वंस उन्मुखता हो जाने से उसी प्रकार प्रायः प्रतिबिम्ब-रूप से भासते हैं उस चैतन्यवर्ग का वैसा पदार्थ राशि में भासित होनारूप जो वैशिष्ट्य है वही सदाशिव तत्त्व है। किन्तु मन्त्रेश्वररूप चैतन्यराशि का स्फुट दशा में हम लोगों की बाहरी इन्द्रियों के मार्ग से संप्राप्त जो पदार्थसमूह के सदृश जगत् है उसमें प्रतिबिम्बरूप से भासता है उसका वैसा फैलाव होना ही तो ईश्वर तत्त्व कहलाता है। किन्तु सदाशिवभट्टारक और ईश्वरभट्टारक तो ध्येय-उपास्यादिरूपता से प्रकाशित होते हैं। ब्रह्मा, विष्णु के तुल्य सदाशिव भट्टारक एवं ईश्वरभट्टारक को भिन्न भिन्न ही समझना चाहिए। इनमें नाम की समानता को लेकर भ्रमित नहीं होना होगा।

[ सदाशिव भट्टारक और ईश्वर भट्टारक अर्थात् भट्टारक, भट्ट और भट्टार ये शब्द परस्पर एकार्थक होते हैं, भट् धातु से तन् प्रत्यय होकर भट्ट शब्द निष्पन्न हुआ है। भ्वादिगण में पठित भट् धातु का पोषण अर्थ होता है [ भट् भृतौ ]। भट्ट का अर्थ है पोषण करनेवाला स्वामी अर्थात् ईश्वर। इन शब्दों का प्रयोग प्रायः श्रेष्ठ लोगों के लिए अथवा ब्राह्मण और राजा-महाराजाओं के लिए आदर देने के रूप में आते हैं यहाँ प्रकृत प्रसङ्ग में भट्टारक शब्द अपने से जो पूज्य है उसके लिए लगाया गया है और सदाशिव सब के पूज्य एवं स्वामी भी है। कुछ लोगों का कहना

---

**१. संहार दशा में तो प्रायः जैसे चित्रकार के मन में प्रदर्शित चित्र की प्रथम एक धुँधली सी रूपरेखा रहती है, अनन्तर उसका अधिक स्पष्टरूप उभरने लगता है और रंग देने पर इससे भी अधिक चित्र अभिव्यक्त होने लगता है, उसी प्रकार सदाशिव दशा में भी सारा का सारा विश्व अस्फुट दशा में अवस्थित रहता है और ईश्वररूप उन्मेष अवस्था में विकसित हो जाता है। जैसा कि सरोवर का कमल। 'अहम् इदम्' यह सदाशिव का प्रत्यवमर्श है तथा ईश्वर का प्रत्यवमर्श है 'इदम् अहम्' है।**

**२. इस विषय में आगम भी कहता है—**

**तस्मिन्नेवेश्वरे तत्त्वे संस्थितः परमेश्वरः।**
**शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः॥**

**उसी ईश्वर तत्त्व में बैठा हुआ परमेश्वर है। शिव की इच्छा-शक्ति से अनुगत होकर जगत् के उत्पादक, पालक इत्यादि होते हैं।**

ब्रह्मविष्णुतुल्यः पृथगेव मन्तव्यो न तु नामसारूप्याद्भ्रमितव्यम्। यदाहुरेके 'ब्रह्मविष्णुरुद्रा अपि तत्त्वमध्ये किं न गणिताः' इति ॥ २ ॥

नामधेयान्तरमप्यत्र तत्त्वद्वये दर्शयति—

**ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः ।**

यस्योन्मेषादुदयो जगतः,—इत्यत्र ईश्वरतत्त्वमेवोन्मेषशब्देनोक्तम्। विश्वस्य हि स्फुटत्वं बाह्यत्वमुन्मेषणं, निमेषणं त्वस्फुटत्वापादनमन्तारूपतोद्रेचनम्,—इति निमेषः सदाशिवतत्त्वं यतो जगतः प्रलयः,—इति शुद्धोऽयं स्पन्दः परमेश्वरस्याचलस्याप्यप्ररूढरूपान्तरापत्तिलक्षणः किञ्चिचचलनात्मतया स्फुटद्रूपत्वात्। परमेश्वरस्य हि परमार्थत एताः शक्तयो यस्तत्त्वग्रामः,

है कि ब्रह्मा, विष्णु और रुद्र को भी इन तत्त्वों के बीच में क्यों नहीं गिन लेते हो ? ॥ २ ॥

दूसरे नाम भी इन्हीं दोनों तत्त्वों में गतार्थ होते हैं—

बाहर का उन्मेष ईश्वरतत्त्व है और भीतर का निमेष सदाशिवतत्त्व है।

जिसके उन्मेष से इस जगत् की उत्पत्ति होती है। इस स्थल में ईश्वरतत्त्व को ही उन्मेष शब्द से कहा गया है; क्योंकि विश्व का बाहर में स्फुटरूप से व्यक्त होना ही उम्मेष माना जाता है। एवं अस्फुटरूप से अन्त.करण में सम्मिलित कर लेने का नाम ही निमेष है, निमेष ही सदाशिव तत्त्व कहलाता है जिससे जगत् का प्रलय होता है। इस प्रकार यह शुद्ध स्पन्द है जो अचल परमेश्वर का दूसरा रूप न होना स्वरूप माना जाता है किञ्चित् चलनात्मकरूप से स्फुरित होने

१. गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात्। लब्धात्मलाभा सततं स्युर्ज्ञस्यापरिपन्थिनः ॥

सतोगुण, रजोगुण और तमोगुण इन तीनों गुणों की साम्यावस्था प्रकृतितत्त्व हैं इससे निकले हुए नील-सुखादि-गुण-स्पन्दों अनन्त प्रवाह सामान्य-स्पन्द पर ही आश्रित रहते हैं ऐसी परिस्थिति में वे निरन्तररूप में प्रवाहमान होते रहने पर भी उस योगी के लिए प्रतिद्वन्दी नहीं बन सकता है; क्योंकि चिति-शक्ति को हृदयंगम करनेवाले के लिए मार्ग प्रशस्त हो जाता है चिद्रूप का आवरण न कोई है और न कोई हो ही सकता है।

प्रतिष्ठित एवं अप्रतिष्ठितरूप से स्पन्द दो प्रकार के होते हैं। प्रतिष्ठित स्पन्द सारे विश्व वैचित्र्य का एकमात्र कारण है एवं विराट्-चेतना होने के कारण, नामरूपात्मक सारे पदार्थों के भी मूल कारण हैं। अप्रतिष्ठित स्पन्दन माया तत्त्व से लेकर पृथिवी तत्त्व तक अनेक भेदों से मिला हुआ रहता है यद्यपि अनेक भेद-उपभेद से युक्त होते हुए भी एकत्व में ही अवस्थित रहते हैं। इससे यह सिद्ध होता है कि विश्व का कोई भी पदार्थ, चाहे प्रस्तर खण्ड ही क्यों न हो, वस्तुतः उसका सम्बन्ध विराट् स्वरूप के प्रवाह से ही रहता है, शैवाद्वैत दर्शन में स्पन्दों की प्रवाहमानता की प्रक्रिया इस प्रकार है—

तेन आहुः किल संवित् प्राक् प्राणे परिणता……। बाहर में उन्मुख होकर, सर्वप्रथम, प्राण अर्थात् सूक्ष्म प्राणना अर्थात् विश्वचेतनता के रूप में परिणत हो जाती है। संवित् प्रकाश स्वरूपवाली तो है ही परन्तु इसका विमर्शरूप भी रहता है। शास्त्रीय भाषा में इस विमर्शमय प्रकाश को आनन्द-शक्ति से कहा गया है। जैसा कि—आनन्द शक्ति सैवोक्ता यतो विश्वं विसृज्यते। संविन्मात्रं हि यच्छुद्धं प्रकाश परमार्थकम्। तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नभः ॥ ( तं० )

संवित् वेद्य-विषय को अपने से भिन्न कर गगन सदृश स्वयं अवस्थित रहती है।

काचित् तु शक्तिरन्यबहुतरशक्तिक्रोडीकारं कुर्वती निकटत्वादुपास्या घटस्येव घटत्वात्मिका, काचिदन्यापेक्षिणी स्वरूपमात्रनिष्ठा दूरा घटस्येव सत्तात्मिका। एवं निमेषोन्मेषशक्ती एव सदाशिवेश्वरौ तयोस्त्वधिष्ठातृदेवते अपि तथानामे।

अथ तदधिष्ठातृदेवताद्वयगतं करणं विद्यातत्त्वमाह—

**सामानाधिकरण्यं च सद्विद्याहमिदन्धियोः ॥ ३ ॥**

प्रकाशस्य यदात्ममात्रविश्रमणमयनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽ'हम्' इति उच्यते; यस्त्वन्योन्मुखः स 'इदम्' इति स च स्वप्रकाशमात्रे पुनरनन्योन्मुखरूपे विश्राम्यति परमार्थतः। तत्राद्ये विमर्शेऽपि शिवतत्त्वं,द्वितीये विद्येशता, मध्यमे तु रूपे 'अहमिदम्' इति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथ ईश्वरभट्टारके च, इदंभावस्य तु ध्यामला-ध्यामलताकृतो विशेषः। ये एते 'अहम्' इति 'इदम् इति धियौ तयोर्मायाप्रमातरि पृथगधिकरण-त्वम् 'अहम्' इति ग्राहके 'इदम्' इति च ग्राह्ये, तन्निरासेनैकस्मिन्नेवाधिकरणे यत्संगमनं संबन्ध-

के कारण। परमार्थतः जितने भी तत्त्वसमूह हैं वे सब के सब परमेश्वर की ही सारी शक्तियाँ हैं। कोई शक्ति तो दूसरी अनेकों शक्तियों को अपने में सम्मिलित करके निकटवर्ती होने के कारण उपासना करने योग्य बन जाती है। जैसे घट की घटत्वात्मिका-शक्ति। कोई तो किसी अन्य की अपेक्षा रखती हुई केवल स्वरूप में ही रहनेवाली होती है जबकि अत्यन्त दूर में रहने के कारण घट की सत्तारूप शक्ति के समान होती है। इस प्रकार निमेषरूप और उन्मेषरूप ये ही दो शक्तियाँ सदाशिव और ईश्वर हैं उनकी अधिष्ठातृदेवता-शक्ति भी दो नाम रूपवाली कहलाती है।

अब उसके अधिष्ठातृ देवता दोनों के कारण विद्यातत्त्व कहते हैं—

'अहम् और इदम्' इन दोनों प्रकार की बुद्धियों का सामानाधिकरण्य सद्विद्या तत्त्व में होता है ॥ ३ ॥

प्रकाश का अपने स्वरूप में केवल विश्राम लेना और किसी अन्य की ओर उन्मुखता न रखता हुआ अपने स्वात्मरूप मात्र में विश्रान्ति लेनेवाला स्वभाव विमर्श का है उसे 'अहम्' विमर्श से कहा जाता है; किन्तु जो किसी अन्य की अपेक्षा रखता है वह तो 'इदम्' है, परमार्थतः उसकी भी विश्रान्ति अनन्योन्मुख स्वरूपवाले स्वप्रकाश मात्र में हो जाती है। प्रथम 'अहम्' विमर्श में शिवतत्त्व रहता है, द्वितीय में विद्येश्वरता, किन्तु मध्यमरूप में तो 'अहमिदम्' 'सम-धृततुलापुटन्यायेन' विमर्श होता है, वह सदाशिव भट्टारक और ईश्वर भट्टारक इन दोनों में रहते हैं, इदम् अंश का तो कुछ ध्यामल [ धुँधला ] और अध्यामल रूपता को लिए हुए वैशिष्ट्य रहता है। जो 'अहमिदम्' ये दो तत्त्व हैं इनमें अहम् अंश एक तत्त्व है, दूसरा इदम् अंश है [१]इन दोनों तत्त्वों की बुद्धि माया प्रमाता में भिन्न-भिन्न अधिकरणता को रखती हुई दो भागों में -विभक्त हो जाती है, 'अहम्' अंश का ग्राहक [ प्रमाता ] में विमर्श होता है और 'इदम्' अंश का

१. जब मध्यमकोटि में विश्रान्ति लेते हैं तब 'अहमिदम्' ग्राहक [ प्रमाता ] में ग्राह्य [ प्रमेय ] का प्रक्षेप होता है इसलिए ध्यामल ग्राह्य अंश का विमर्श सदाशिवनाथ में 'अहमिदम्' इस रूप से होता है, 'इदमहम्' इस का ग्राह्य [ प्रमेय ] में प्रस्फुटित होने पर 'अहम्' इस अंश के प्रक्षेप से सामानाधिकरण्य विमर्श ईश्वरभट्टारक में होता है।

स्वरूपप्रथनं तत् सती शुद्धा विद्या; अतोऽशुद्धविद्यातो माया :प्रमातृगताया अन्यैव। तत्र यदा 'अहम्' इत्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदा तस्यास्फुटत्वात् सदाशिवता 'अहमिदम्' इति। 'इदमहम्' इति तु इदमित्यंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरता,—इति विभागः ॥ ३ ॥

ननु कस्मादियं शुद्धा विद्या ? इत्याह—

इदं भावोपपन्नानां वेद्यभूमिमुपेयुषाम् ।
भावानां बोधसारत्वाद्यथावस्त्ववलोकनात् ॥ ४ ॥

अवलोकनं प्रथनं वेदनं विद्या, यथावस्तुत्वं वस्त्वनुसारित्वं च; तस्याः शुद्धिरविपरीतता। वेद्यदशां चोपगतवतामङ्गीकृतवताम्, अत एवेदमित्येवंभूतेनोचितेन परामर्शेनोपपन्नानां परामृश्यमानानां भावानां 'बोध' एव प्रकाशात्मा साररूपं वस्तु, प्रकाशश्चानन्योन्मुखविमर्शात्माहमिति। तदेषां यदेव पारमर्थिकं रूपं तत्रैव प्ररूढत्वात् अहमित्यस्य शुद्धवेदनरूपत्वम् ॥ ४ ॥

ग्राह्य [ प्रमेय ] में विमर्श होता है।

इद दोनों तत्त्वों के द्वित्व को छोड़ देने पर एक ही अधिकरण [ स्व-स्वरूपाख्य ] में जिसका सम्बन्ध स्वरूप फैलता है—ऐसी अवस्था में विद्यातत्त्व की प्रधानता रहती है; इसलिए माया प्रमाता में रहनेवाली अशुद्ध विद्या से तो इस तत्त्व को सर्वथा भिन्न ही समझना चाहिए। शुद्धविद्या में जब 'अहम्' इस अंश का, जो अधिकरण चिन्मात्ररूप है उसीमें 'इदम्' इस अंश को उल्लासित करता है तब उसको अस्फुटता रहने के कारण सदाशिवता, 'अहमिदम्' यह विमर्श होता है। 'इदमहम्' इसरूप में तो इदन्तांश के प्रस्फुटित होने पर जब अहम् अंश के विमर्श को सींचता है तब ईश्वरता होती है, 'इदमहम्' इस अवस्था में ईश्वर तत्त्व रहता है, इन दोनों तत्त्वों का यही विभाग है ॥ ३ ॥

अब शङ्का होती है कि यह कैसे शुद्ध विद्या कही जाती है ? इस आशङ्का का समाधान करते हैं—

इदन्ता परामर्श से उपपन्न वेद्यदशा को स्वीकार किये गये परामृश्यमान पदार्थों के यथार्थ स्वरूप का बोध-ज्ञान हो जाने के कारण शुद्ध विद्या कहलाती है ॥ ४ ॥

वस्तु के अनुसार अवलोकन करना, प्रथम करना और ज्ञान करना ही विद्या कहा जाता है, जैसी वस्तु है उसके अनुरूप उसे जान लेना, उससे विपरीत अर्थ में न समझना ही विद्यातत्त्व है। वेद्यभूमि को प्राप्त हुए अर्थात् अङ्गीकार किये गये, अत एव इदंभाव के समुचित प्रत्यवमर्श से उपपन्न परामृश्यमान पदार्थों का 'बोध' ज्ञान ही प्रकाश स्वरूप वस्तुतत्त्व है, वह प्रकाश ही किसी अन्य की अपेक्षा न रखनेवाला विमर्शात्मा 'अहम्' कहलाता है। जो इनका पारमार्थिकरूप है उसी में बढ़ जाने के कारण 'अहम्' इस अंश की शुद्ध संवेदनरूपता मानी जाती है ॥ ४ ॥

---

१. 'अहम् और इदम्' इन दोनों तत्त्वों का परामर्श अर्थात् प्रत्यवमर्श शुद्धविद्या में एक समानरूप से होता है। यथा 'समधृततुलापुटन्यायेन' जैसे तराजू के दोनों पलड़े बराबर रहते हैं। इस में क्रिया-शक्ति की प्रधानता रहती है और इस अवस्था में अहम् एवं इदम् दोनों का विमर्श इस तरह समानरूप से अभिव्यक्त होता है कि यद्यपि इस समय में भी अहम् और इदम् दोनों एक समान हैं फिर भी दोनों की

अधिष्ठातृरूपाद्देवताद्वयात् तत्त्वद्वयं विभक्तम्,—इत्येतद्भङ्ग्या प्रतिपादयत्यागमव्यवहारेण—

अत्रापरत्वं भावानामनात्मत्वेन भासनात् ।
परताहन्तयाच्छादात्परापरदशा हि सा ॥ ५ ॥

परत्वं पूर्णत्वमनन्यापेक्षाहमिति, 'अपरत्वम्' अपूर्णतान्यापेक्षेदमिति; अत्र च तत्त्वद्वये भावानां ध्यामलाध्यामलरूपाणामुभयांशस्पर्शात् परापरत्वमिति। वेद्यभावनिष्ठा दशा तत्त्वस्वरूपा तदवभासयितृमन्त्रेश्वरादिशुद्धप्रमातृसंवेद्यवस्तुसारा। या तु तन्निष्ठसंवेदनदशा सा शुद्धा विद्या, तत्प्रमातृवर्गाधिष्ठातृत्वं श्रीसदाशिवेश्वरभट्टारकरूपता,—इति संक्षेपः ॥ ५ ॥

अधिष्ठातृरूप से दोनों देवताओं के दोनों तत्त्व विभाजित कर दिये गये, [ समान नामवाले होते हुए भी दो तत्त्वों में विभक्त रहना ही है ] अब आगम व्यवहार से प्रतिपादन करते हैं—

अपरत्व पदार्थों को अनात्मकरूप से प्रकाशित करता है। परत्व अर्थात् प्रकृष्ट स्वतन्त्रदशा अहन्तारूप से आच्छादित करने के कारण परदशा और अपरदशा में भासित करता है ॥ ५ ॥

परत्व परिपूर्णभाव का नाम है, अपने आपको प्रकाशित करने के लिए किसी अन्य की अपेक्षा नहीं रखनेवाला अहम् परामर्श है; 'अपरत्वम्' परापेक्षी इदंभाव को अपरत्व कहते हैं, जिसको सदैव दूसरे की अपेक्षा रखनी पड़ती है, इसी कारण यह इदंभाव अपूर्ण रहता हुआ परापेक्षी सर्वदा बना रहता है। ये दोनों तत्त्व ध्यामल एवं अध्यामल रूपों में पदार्थों का उभय अंश स्पर्श करते हुए परत्व एवं अपरत्वरूप से रहते हैं; वेद्यभाव में रहनेवाली अवस्था यथार्थरूप से उन-उन पदार्थभावों को अवभासित करनेवाले मन्त्रेश्वर इत्यादि शुद्धप्रमाताओं के रूप में संवेद्य वस्तुसार अर्थात् अपरत्व है। किन्तु उन संवेदनरूप ज्ञानों में रहनेवाली अवस्था है वही शुद्धविद्या कहलाती है, उन-उन प्रमातृवर्ग के अधिष्ठातृत्वदेव श्री सदाशिवभट्टारक और ईश्वरभट्टारकरूप ही है। इसका इतना ही मात्र सार है ॥ ५ ॥

---

भिन्नता एक प्रकार से विशेषता को लेती हुई प्रतीत होती है। उस अवस्था में विमर्श भेदाभेदरूप से होता है। जैसा कि इदम् अंश का अहम् अंश से भेद प्रतीत होता है, तथापि अहम् अंश इदम् को अपना एक भाग मानता है। इससे अहम् और इदम् का सामानाधिकरण्य दिखायी देता है। शिवतत्व 'अहम्' इस अंश का प्रत्यवर्श है; सदाशिव तत्त्व में 'अहमिदम्' प्रत्यवमर्श है; ईश्वरतत्त्व में 'इदमहम्' प्रत्यवमर्श रहता है। इन सभी में 'अहम्' शिवतत्त्व की प्रधानता मानी जाती है। शुद्धविद्या में दोनों तत्त्वों के प्रत्यवमर्श समानरूप से [ अहं च इदं च ] यह प्रत्यवमर्श भेददशा और अभेददशा के मध्य का है। इसी कारण इसे परदशा एव अपरदशा से भी कहते हैं। इसे शुद्धविद्या अथवा सद्विद्या के नाम से भी कहते हैं; क्योंकि 'इदंभावोपन्नानां वेद्यभूमिपेयुषाम्। भावानां बोधसारत्वात्'''''॥ इस अवस्था में समस्त वस्तुओं के वास्तविक सम्बन्ध का विमर्श हो जाता है और सब विमर्श भी मानसिक होता है, इसी कारण शुद्धध्वा कहा जाता है; क्योंकि इस अवस्था में परमेश्वर का स्वरूप स्वच्छ ही रहता है अर्थात् माया से धूसरित नहीं होता।

एवमेकेषां मते 'अहम्' इत्याच्छादको यो भागः, तत्प्रथाप्रधाना शुद्धविद्या। अन्ये तु मन्यन्ते,—योऽसाविदंभाग आच्छादनीयस्तस्य यदवभासनं तत्प्रधाना शुद्धविद्या। अन्यथा हि स इदमशंः केन भास्यतां मायायास्तत्राभावात् भावे वा प्ररोहप्रसङ्गात्; अत एवेयं प्ररोहासहिष्णुं यत इदन्तां भासयति ततः शुद्धाभासनाच्च विद्येति। तत एवाप्ररूढमायाकल्पत्वात् महामायेयं श्रीरौरवादिगुरुभिरुपदिष्टा, तदेतदाह—

भेदधीरेव भावेषु कर्तुर्बोधात्मनोऽपि या।
मायाशक्त्येव सा विद्येत्यन्ये विद्येश्वरा यथा॥ ६॥

मायाप्रमातरि शून्यादिरूपेऽप्यनुल्लसिते, चिन्मात्र एव प्रमातरि कर्तरि च सति चिदेकरूपेष्वपि भावेषु यदचिद्रूपतया तदप्रकाशनलक्षणं स्वातन्त्र्यं सा शुद्धविद्या माया शक्त्या तुल्या, वेद्यभागे भेदप्रकाशनात्। न च मायैव, ग्राहकस्य चिन्मात्रभागे तावदविपर्यासनात्, येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्या वर्तन्ते। ते हि शुद्धचिन्मात्रगृहीताहंभावाः स्वतस्तु भिन्नं वेद्यं पश्यन्ति, यथा द्वैतवादिनामीश्वरः। एवं ग्राहकेंऽशतश्चैतन्यरूपात् परमार्थरूपे ग्राह्यविपर्यासनशक्तिः

इस प्रकार कोई तो कहते हैं कि 'अहम्' यह जो आच्छादक भाग है, [ समस्त वेद्यपदार्थों को अपने में आत्मसात् कर लेना और दूसरों की आकांक्षा न रखने के कारण अद्वैतरूप से पूर्ण रहना ही आच्छादक 'अहम्' परामर्श है।] उसको विस्तार करनेवाली शुद्धविद्या कहलाती है।

किन्तु इस विषय में दूसरे लोग भी कहते हैं—जो वह इदंभाग आच्छादनीय है उसका आभासन करना है जिसमें शुद्धविद्या का प्राधान्य माना जाता है। नहीं तो, शुद्धविद्या के बिना उस इदभाग किससे आभासित होगा; क्योंकि मायाप्रमाता का उसमें रहना संभव नहीं है जिससे इदंभाग भासित हो सके। यदि वह रहता तो उसीका विस्तार होता इसलिए विस्तार को न सहनेवाली इदन्ता को जिससे आभासित करती है अर्थात् इदन्ता को प्रकाशित करनेवाली होने से और शुद्ध आभास से आभासित होनेवाली होने के कारण शुद्धविद्या है। इसलिए अप्ररूढ माया के सदृश होने के कारण इसको श्री रौरवादि गुरुजनों ने भी महामाया कहा है, इसको दिखाते हैं—

बोधात्मा कर्ता की भेदबुद्धि ही पदार्थों में माया-शक्ति के जैसी भासती है। वही शुद्धविद्या है जैसे कुछ विद्येश्वर लोग [ विद्येश्वर-शक्ति ] शुद्धविद्या मानते हैं॥ ६॥

माया प्रमाता में शून्यादिरूप प्रमाता अनुल्लसित होते हैं, चिमान्त्र ही प्रमाता के कर्ता रहने पर चिद्रूप के साथ पदार्थों की एकता भी हो जाती है जिसका अचिद्रूप से प्रकाशन नहीं होता है वही स्वातन्त्र्यरूप [ भेद प्रकाशरूप माया-शक्ति के जैसा ] शुद्धविद्या है जो कि माया-शक्ति के जैसी रहती है, इससे वेद्य अंश में भेद का प्रकाश होता है। वह माया नहीं है; क्योंकि ग्राहक [ प्रमाता ] के चिन्मात्र भाग में कुछ भी तो उलटा-पलटा नहीं कर सकती, जिस प्रकार से भगवान् विद्येश्वर अनन्तादि हैं, वे लोग शुद्ध संविद्रूप चिन्मात्र में अहंभाव को गृहीत किये हुए अपने से भिन्न वेद्य वस्तु को देखते हैं। जैसे द्वैतवादियों का ईश्वर अर्थात् द्वैत सिद्धान्त को माननेवाले अपने से सर्वथा भिन्न ही ईश्वर को मानते हैं। इस प्रकार ग्राहक [ ज्ञाता ] में चैतन्य अंश से परमार्थरूप ग्राह्य में जो विपरीत भाव का भर देनेवाली शक्ति है वही विद्येश्वरों को

शुद्धविद्या विद्येश्वराणाम् ॥ ६ ॥

परे प्राहुः—भगवतः परमशिवस्याप्ररूढभेदावभासनं सदाशिवेश्वरता। तत्रास्फुटत्वे इच्छाशक्तिरीश्वरस्य व्याप्रियते, स्फुटत्वे ज्ञानशक्तिः, प्ररूढे तु भेदे ग्राह्यविपर्यासेऽपि ग्राहकचिन्मात्रतायां विद्येश्वरेषु क्रियाशक्तिः, ग्राहकग्राह्यविपर्यासद्वयप्ररूढौ तु मायाशक्तिः, सा च पशुप्रमातृषु, ग्राहकग्राह्योभयविपर्याससंस्कारे तु अविनिवृत्तेऽपि यदेतत् वस्तुपरमार्थप्रथनं तत्र विद्याशक्तिव्यापारो योगिज्ञानिप्रभृतिष्वपशुप्रमातृषु; तदेतद्दर्शयति—

तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका।
विद्याशक्तिः..........................

'पशुभावे' विपर्यासैकरसत्वलक्षणे पाशनीयत्वेऽस्वतन्त्रे दृश्यद्रष्टृदर्शनभेदे सत्यपि जाते

शुद्धविद्या है ॥ ६ ॥

दूसरे लोगों का कहना है कि भगवान् परम शिव का अप्ररूढरूप से भेदपूर्वक भासित होना ही सदाशिवता और ईश्वरता मानी जाती है। उसमें अस्फुट दशा रहने पर ईश्वर की इच्छा-शक्ति व्यापार करती है तथा स्फुट होने पर ज्ञान-शक्ति व्यापार करती है, भेद की प्ररूढदशा में तो ग्राह्य [ प्रमेय ] का विपर्यास हो जाने पर भी ग्राहक [ प्रमाता ] की शुद्धचिन्मात्रता में विद्येश्वर लोगों की क्रिया-शक्ति का व्यापार रहता है, ग्राह्य और ग्राहक इन दोनों का विपर्यास प्ररूढ हो जाने पर तो माया-शक्ति व्यापार करती है और वह विशेषरूप से पशुप्रमाताओं में, ग्राह्य एवं ग्राहक इन दोनों के विपर्यास संस्कार में तो अविनिवृत होने पर भी, जिस वस्तु परमार्थ का फैलाव अर्थात् प्रकाश, उन पशुप्रमाताओं से व्यतिरिक्त योगिजनों में विद्या-शक्ति व्यापार करती है, इसको दिखाते हैं—

उस ऐश्वर्य स्वभाववाले परम शिव का पशुरूप में प्रकाश करनेवाली विद्या-शक्ति मानी जाती हैं.......... ।

'पशुभावे' जो श्लोक में निर्देश है इससे यह व्यक्त होता है कि जिसका विपर्यास कर देना मात्र स्वरूप है जो कि पाश बद्ध एवं अस्वतन्त्र है उसमें दृश्य, द्रष्टा के भेद दिखाने पर भी पहले

---

१. परमेश्वर के स्वातन्त्र्य से उपजीवित होनेवाली विद्येश्वर-शक्ति शुद्धविद्या कहलाती है। इसलिए विद्येश्वर लोगों ने दीक्षा-दान अर्चनादि से ही इसकी प्राप्ति की है। जिसमें 'अहम्' और 'इदम्' अंश इन दोनों का ज्ञान भिन्न-भिन्न रहता है। यद्यपि भेद का आरम्भ यहाँ से हो होता है तथापि भेद के भीतर अभेद अवस्थित रहता है। इस तत्त्व में क्रिया की प्रधानता होती है। 'मन्त्र' इस तत्त्व का प्रमाता है। इसमें प्रत्यवमर्श 'इदं च अहं च' इस रूप से होता है। विश्व भिन्न है, किन्तु सर्वथा भिन्न नहीं है। इसी कारण इस दशा को 'शुद्धविद्या' कहते हैं।

जब कि विद्येश्वर लोग साक्षात् प्रमाता हो होते हैं। इस पर कहा भी है—अधिकारं न चेत्कुर्याद्विद्येशः स्यात्तनुक्षये। यदि अधिकार न करे, तो विद्येश्वर लोग शरीर के क्षीण हो जाने पर शिवस्वरूप हो जाते हैं विद्यातत्त्व में रहने के कारण ईश्वर, सर्वज्ञ इत्यादि विद्येश्वरों को समझे जाते हैं। जैसे पार्थिव ब्रह्माण्ड के अधिपति ब्रह्मा, प्राकृत में विष्णु, मायीय में रुद्र ये कोई दूसरे-दूसरे तत्त्व नहीं हैं तथा परस्पर भिन्न-भिन्न तत्त्व हैं—ऐसा समझना भी नहीं चाहिए।

पूर्वोक्तयुक्तिबलेन यदेतदैश्वर्यमुक्तं तस्य या प्रकाशिका परमेश्वरशक्तिः—यद्वशात् केचिदेव ता युक्तीरादृत्य तदाश्वस्तहृदयाः कृतिनो भवन्ति—सा विद्याशक्तिः। अयमेव षडर्धसारादिदृष्टोऽप्यस्याचार्यस्य हृदयमावर्जयति पक्षः, 'अन्ये' इत्यनुक्तेः। एतदानन्तर्यौचित्येन च मायातत्त्वनिरूपणात्।

तदाह—

············तिरोधानकरी मायाभिधा पुनः ॥ ७ ॥

मायाशक्तिः पुनरचिद्रूपे शून्यादौ प्रमातृताभिमानं प्ररूढं दधती भावानपि चिन्मयान् भेदेनाभिमानयन्ती सर्वथैव स्वरूपं तिरोधत्ते आवृणुते विमोहिनी सा। तिरोधानमत्र न विलयरूपं मन्तव्यं, यत् कृत्यपञ्चकमध्य आगमेषु गण्यते, दीक्षितस्यापि गुरुमन्त्रादिनिन्दनप्रायमपि त्वावरणमेव ॥ ७ ॥

तिरोधानमावरणरूपं स्फुटयति—

भेदे त्वेकरसे भातेऽहंतयानात्मनीक्षिते।
शून्ये बुद्धौ शरीरे वा मायाशक्तिर्विजृम्भते ॥ ८ ॥

कही हुई युक्ति के बल से ऐश्वर्य कहा गया है।

उसका प्रकाश करनेवाली पारमेश्वरी-शक्ति है, जिसके सामर्थ्य से कोई-कोई जन ही उन युक्तियों का आदर कर, आश्वस्त हृदय होकर कृतकृत्य [ निष्कल-प्रमाता ] हो जाते हैं—वही विद्या-शक्ति है। यही पक्ष त्रिक शास्त्र के द्वारा देखा गया है जो कि आचार्य के हृदय को अत्यधिक आकर्षित करनेवाला है जिस कारण से 'अन्ये' ऐसा कहा नहीं है। इसके अनन्तर ही मायातत्त्व का निरूपण करना उचित माना जाता है।

इसके लिए कहते हैं—

······इसी को तिरोधान करनेवाली माया-शक्ति के नाम से कहा जाता है ॥ ७ ॥

अचिद्रूप शून्यादि में प्ररूढरूप से प्रमातृता का अभिमान बढाती हुई, भाव-पदार्थों को भी भेदपूर्वक चिन्मयरूप में करती हुई सब प्रकार से संवित् स्वरूप को आवृत्त कर देनेवाली माया-शक्ति समस्त-प्रपञ्चजाल को विमुग्ध कर डालती है। इसमें तिरोधान कर देने का अर्थ विलयरूप नहीं लेना होगा कि जिसमें समस्त वस्तु-पदार्थ क्षत-विक्षत हो जायें, किन्तु विशेषरूप में जिस परम चिद्रूप में लय अर्थात् अपने स्वरूप में आत्मसात् कर लेना है, जिसकी गणना आगमों में कृत्यपञ्चक के मध्य संहार शब्द से की गयी है। दीक्षा से दीक्षित हुए लोगों का भी गुरु मन्त्रादि के विषय में निन्दादि करना केवल आवरण ही माना जाता है ॥ ७ ॥

उसी आवरणरूप तिरोधान को स्पष्ट करते हैं—

किन्तु एकरस चिद्रूप में भेदपूर्वक बोध होने पर अनात्मतत्त्व में अहंरूप से प्रतीति होने लगती है। शून्य, प्राण, बुद्धि अथवा शरीरादि प्रमाताओं में माया-शक्ति का उल्लास उद्गम होता है ॥ ८ ॥

सुषुप्ते प्रलये 'न' इत्यभावसमाधौ च तावच्छून्यमाकाशकल्पमनात्मरूपं वेद्यभावोचितम् 'अहम्' इत्यात्मत्वेन वीक्ष्यते; उच्छ्वसननिःश्वसनादौ वा अहमुच्छ्वसिमि,—इति प्राणो वायुकल्पः, स्थावरजङ्गमजिघत्सामन्युप्रज्वलनादौ वा प्राण एव तेजः समुपबृंहितः, स्वच्छोदकाशयकल्पा

सुषुप्ति दशा, प्रलयदशा और 'न' नकारात्मक जिसमें कुछ भी नहीं है—ऐसी अभावरूप समाधिदशा में शून्य आकाश के सदृश स्मर्यमाण होने कारण परमार्थतः अनात्मरूप वेद्यभाव ही 'अहम्' आत्मरूप होने से भासता है।

---

१. नाभावो भाव्यतामेति न च तत्रास्त्यमूढता। यतोऽभियोगसंस्पर्शात्तदासीदितिनिश्चयः॥

भावना का विषय अभाव तीनों कालों में भी नहीं हो सकता है, अभाव भावना की स्थिति तो जडता की ही स्थिति है जिससे कि योगी को समाधि से उठने के बाद अभिलाप भाषण के साथ संपर्क हो जाने पर मन में ज्ञान होने लगता है कि मेरी अवस्था थी वह तो शून्य सी निश्चय होने लगती है। चिति-शक्ति का उसी प्रकार का स्वभाव नहीं है; क्योंकि चिति-शक्ति तो सदोदिता स्वभाववाली होती है उसमें मूढता की स्थिति की भाँति स्मरण नहीं होता। वह तो सदैव एकरस, अखण्ड, देदीप्यमान रूप में रहनेवाली होने के कारण प्रति समय अनुभव करनेवाला अनुभव-स्मरण स्वातन्त्र्य-शक्ति के रूप में करता रहता है। अभाव भावना का विषय है। इस प्रकार कि अभाव ब्रह्मवादियों का मानना है। तथा माध्यमिक शाखा के बौद्धों का सर्वाभाव अर्थात् सर्वशून्यरूप है। जब कि इस अवस्था में रहनेवाला आत्मतत्त्व अभाव में मिल जाता है—ऐसा मानना युक्ति युक्त नहीं है। यदि अभाव ब्रह्मवाद के अनुसार आत्मा का वास्तविक स्वरूप अभाव मान कर उससे किसी भी प्रकार की सत्ता के अनस्तित्व का सिद्धान्त स्वीकारलिया जाये तो एक बाधा उपस्थित होती है। वह यह है कि अभाव अवस्था में किसी की वेदन सत्ता का अस्तित्त्व शेष न रहने के कारण उस अभाव अवस्था का अनुभव कौन करेगा ? ऐसे अभाव से कारणरूप सत् जगत् का उदय कैसे हो सकेगा; क्योंकि असत् तो जड आकाश पुष्प के समान है उससे फिर उत्पत्ति कैसे बन पायेगी अर्थात् असत् से सत् की उत्पत्ति होना कदापि संभव नहीं है और न ऐसा तर्क करना ही ठीक है।

'नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ २।१६ गीता

सद्रूप का अभाव कभी भी नहीं हो सकता एवं असद्रूप का भाव ही होता है; क्योंकि तत्त्वदर्शी लोगों ने दोनों को बड़ी सूक्ष्मता से देख कर प्रतिपादन किया है कि 'इदमित्थम्' यह ऐसा ही है।

अतस्तत्कृत्रिम सेयं सौषुप्तपदवत्सदा। न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते॥

जो पशु प्रमाताओं को अभाव की भावना समाधि होती है वह तो मात्र [ सुषुप्ति ] तामसिक निद्रा के सदृश कृत्रिम ही है। वह तत्त्व [ चिद्रूप ] इस जडभावना के समान कदापि स्मर्यमाण का विषय नहीं हो सकता है—अर्थात् अभाव भावना का साक्षात्कार करनेवाले किसी को इस भूमिका का लाभ हो जायें, तो भी अनुभूति तो तन्द्रा जैसी ही होती है। इसलिए अनित्य, कृत्रिम उसे मानना चाहिए। एवं आत्मा का स्वरूप अनवच्छिन्न 'त्रिकाल बाध्यत्वम्' अर्थात् जिसका तीनों कालों में भी बाध नहीं हो सकता है, इस युक्ति से सिद्ध है। इस स्वरूप की सतत गुरु परम्पराक्रमपूर्वक उपासना करते रहना चाहिए।

**वेद्यप्रतिबिम्बनवती वा बुद्धिरभिनिविश्यते। अन्तरहं वेद्मि दुःख्यहमिति चिन्ताद्यवस्थासु, शरीरमेव पृथिवीप्रायं कृशोऽहमित्यादिदशासु अहमित्यात्मतया भाति। सर्वं चैवेदं शून्यादि वस्तुतश्चिन्मात्रसारमेव माययैव तावदचिद्रूपतया भासितम्। तथाविधमेव तु सत् अहमिति संविद्रूपताभिनिवेशस्थानं संपादितमप्रशान्तजडभावमेव,—इति दुष्करतमवस्तुसंपादनाप्रतीघातरूपा परमेश्वरस्य मायाशक्तिः,—इत्येतत् 'विजृम्भते' इत्यनेन दर्शितम्। वाग्रहणेन वेद्यरूपाणां सुतधनदारादीनामप्यहंताभिनिवेशविषयत्वमसंख्यातं सूचयति ॥ ८ ॥**

**नन्वचिद्रूपत्वादनात्मा यदि शून्यादिस्तदात्मतयासौ अभिनिविश्यमानश्चिद्रूप एव,—इति सर्वज्ञत्वसर्वकर्तृत्वादिविशुद्धैश्वर्यधर्मैव स्यात्,—इत्याशङ्क्याह—**

श्वास अर्थात् प्राण वायु लेने में और श्वास निकालने में अथवा तो मैं स्वयं श्वास को लेता हूँ और स्वयं ही श्वास को बाहर की ओर निकालता हूँ,—मानो कि वायु के समान प्राणतत्त्व ही रहता है, जड-जीवजङ्गम को खा डालने के लिए क्रोध की अभिव्यक्ति होने पर तेजपुञ्ज से बढा हुआ प्राण ही रहता है, स्वच्छ निर्मल जलाशय के समान वेद्यभावों में प्रतिबिम्बित होनेवाली बुद्धि का अभिनिवेश देखा जाता है। मैं भीतर जानता हूँ, मैं दुःखी हूँ इस तरह चिन्तादि अवस्थाओं में, जब कि शरीर प्रायः पृथिवी तत्त्व से बना हुआ है; उसी में भी मैं गौरवर्ण हूँ, मैं स्थूल-सुन्दर हूँ इत्यादि अवस्थाओं में 'अहम्' आत्मरूप से भासता है यह सब शून्यादि तत्त्ववस्तु का चिन्मात्र सार ही है जो माया के द्वारा अचिद्रूप अर्थात् वेद्यभाव से भासता है,—"तद्वहिर्न किञ्चित्" इस न्याय से शुद्ध चिन्मात्र का ही यह सारा का सारा विलास-उल्लास दृष्टिगोचर होता है, समस्त वेद्यगत भाव तो माया का स्वरूप है। अचिद्रूप का तिरस्कार न करना, मैं सद्रूप हूँ—ऐसे संविद्रूपता का अभिमान करना मायीय अप्रशान्त जडभाव ही तो है, इस प्रकार दुष्करतम अवस्तुरूप के सम्पादन करने में कभी कहीं भी न रुकनेवाली परमेश्वर की माया-शक्ति कहलाती है। [मायातत्त्व स्वरूप का गोपन कर देती है और अपरिमेय भेदों की जननी है। जिसमें परमेश्वर का स्वरूप तिरोहित हो जाता है। यह तिरोभाव माया और उसके पञ्च कञ्चुकों द्वारा होता है। 'मा' धातु से माया शब्द सिद्ध हुआ है जिसका आशय यह है कि मापना अर्थात् मापकर अलग कर देना एक निर्धारित सीमा में सीमित कर देना। पदार्थों को एक दूसरे से पृथक् कर देती है 'अहम्' अंश को इदमंश से एवं इदमंश को अहमंश से भिन्न कर देती है, नाना भेदों के सर्जन करनेवाली होने के कारण माया-शक्ति कहलाती है। ] यह कारिका में दिया गया 'विजृम्भते' क्रियापद से अवगत होता है। 'वा' शब्द के ग्रहण से द्योतित होता है कि पुत्र, कलत्र, कनक इत्यादि वेद्य-पदार्थों में असंख्य प्रकार से अहन्ता का अभिमान करना भी तो माया-शक्ति का सब व्यापार है ॥ ८ ॥

अब शङ्का की जाती है कि शून्यादि प्रमातृवर्ग अचिद्रूप होने के कारण अनात्मा होते हुए भी आत्मरूप से जाने जाते हैं। इसी कारण वे सब के सब अभिनिविश कर लेने से चिद्रूप ही हो गये, जिससे उनमें सर्वज्ञत्व, सर्वकर्तृत्वादि विशुद्ध ऐश्वर्यधर्म भी मिल जायेंगे,—इस आशङ्का का उत्तर देते हैं—

**यश्च प्रमाता शून्यादिः प्रमेये व्यतिरेकिणि ।**
**माता स मेयः सन्कालादिकपञ्चकवेष्टितः ।। ९ ।।**

स्यादैश्वर्यधर्मयोगः शून्यादेः, यदि अहमित्याभिनिविश्यमानोऽपि नेयतां जह्यात्; तथा हि सति प्रमेयमप्यस्य नीलादिव्यतिरिक्ततया नैव भासेत । यावता यः शून्यादिः प्रमाता कथितः, स यावदेव स्वरूपाद्व्यतिरेकाभिमते नीलादौ प्रमेये माता तावदेव स्वयमपि मेयभूत एव सन् माता । मेयं हि मीयमानत्वाव परिमितम्,—इति तादृशादेव मेयान्तरादुपपन्नव्यतिरेकं, न त्वेवं चिद्रूपमपरिमितत्वात् । परिमितत्वं च शून्यादेरहंभावस्य यत् तदेव कालादिपञ्चकम् । तथा हि कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति, योऽहं कृशोऽभवं स स्थूलो वर्ते भविष्यामि स्थूलतरः,—इत्येवमात्मानं देहरूपं क्रमवन्तमिव पराामृशंस्तत्सहचारिणि प्रमेयेऽपि भूतादिरूपं क्रमं प्रकाशयति । अस्य शून्यादेर्जडस्य विद्या किंचिज्ज्ञत्वोन्मीलनरूपा बुद्धिदर्पणसंक्रान्तं भावराशिं नीलसुखादिं विविनक्ति । कला किंचित्कर्तृत्वोपोद्बलनमयी कार्यमुद्भावयति, किंचिज्जानामि किंचित्करोमि,—इति । अत्र चांशे तुल्ये किंचित्त्वे कस्मादिदमेव किंचित्,—इत्यत्रार्थेऽभिष्वङ्गरूपः प्रमातरि देहादौ प्रमेये च गुणारोपणमय इव रागो व्याप्रियते ।

जो शून्यादि प्रमाता हैं उनसे भिन्न प्रमेय के रहने पर, वह प्रमाता प्रमेयरूप होकर ये कालादि पञ्च कञ्चुकों के द्वारा आवेष्टित हो जाता है ।। ९ ।।

विशुद्ध ऐश्वर्य सर्वज्ञत्व, सर्वकर्तृत्वादि धर्म का योग, शून्यादि प्रमाताओं में भले ही होवें 'अहम्' इस अभिनिवेश से युक्त होकर यदि वह प्रमेयता को छोड़ दे, ऐसा रहने पर ही प्रमेय भी इसका नीलादि-पदार्थों से भिन्न होकर नहीं भासित हो सकेगा । इसलिए यह सब शून्यादि प्रमाता कहा जाता है, जब तक वही स्वरूप से भिन्नरूप नीलादि प्रमेय में प्रमाता बनता है तब तक ही प्रमेय बना हुआ कहलाता है, प्रमेय भी सीमित होने के कारण परिमित अर्थात् संकुचित हो जाता है, इसलिए उसी प्रकार के दूसरे घटादि प्रमेयों से भिन्नरूप में प्राप्त होने के कारण, वह चिद्रूप नहीं हो सकता, चिद्रूप का स्वरूप तो अपरिमित-अपरिच्छन्न होता है । परिमितरूपता शून्यादि प्रमाताओं में अहंभाव का प्राप्त होना है वही कालादि पञ्चक है । देखिये—कालक्रम को दिखाता हुआ प्रमाता में प्रकाशित होकर उसके अनुसार प्रमेय में भी फैल जाता है, तब वह कहने लगता है कि मैं कृश था, वही अभी मैं स्थूल हो गया हूँ तथा आगे इससे भी अधिक स्थूलता को प्राप्त हो जाऊँगा । इस प्रकार देहरूप आत्मा को क्रमवाले के समान मानता हुआ एवं उसका सहचारी प्रमेय में भी भूतादिरूप से क्रम को प्रकाशित करता है । इसी कारण इस शून्यादि जड की विद्या जो [ प्रमाता में आरोप करती है ] किञ्चित् ज्ञत्व उन्मीलनरूप बुद्धि दर्पण में संक्रान्त नील-सुखादि भावराशि के पृथग्रूप से विवेक करती है । कला-महेश्वर का स्वरूप तिरोहित कर देने पर, अणुरूप में ढल जाने पर जिससे उसका सर्वकर्तृत्व संकुचित होकर एक सीमा में सीमित हो जाता है, किञ्चित् कर्तृत्व में विनिमय हो जाता है वही कला है अर्थात् किञ्चित् कर्तृत्व को प्रकाशित करती हुई कार्य को उद्बुद्ध करती है, जिससे कि मैं जानता हूँ—ऐसा अनुभव होता है और किञ्चित् में सम्पादन भी करता हूँ । इसी अंश में किञ्चिद्रूप से समानता होने पर ही क्यों इतना ही किञ्चित् है, इस अर्थ में अभिष्वङ्गरूप प्रमाता, देहादि और प्रमेय में गुण का आरोप

न च तद्बुद्धिगतमवैराग्यमेव, तद्धि स्थूलं वृद्धस्य प्रमदायां न भवेदपि रागस्तु भवत्येव। बुद्धिधर्माष्टकेऽपि च दृष्टोऽभिष्वङ्गः। अत्रैव कस्मादभिष्वङ्ग,—इत्ययमर्थो नियत्या नियम्यते इति। एवं कलाविद्याकालरागनियतिभिरोतप्रोतो माययापहृतैश्वर्यसर्वस्वः सन् पुनरपि प्रतिवितीर्णतत्सर्वस्वराशिमध्यगतभागमात्र एवंभूतोऽयं मितः प्रमाता भाति—इदानीमिदं किंचिज्जानानः, इदं कुर्वाणोऽत्र रक्तोऽत्रैव च यः सोऽहम्—इति। एषां च भिन्नविषयत्वमपि भवति कदाचित्—यथान्यत्र रक्तोऽपि नियत्यान्यत् कार्यते—इति। एते च प्रमातृलग्नतयैव भान्ति,—इति तस्यैव शक्तिरूपाः प्रतिप्रमातृभिन्ना एव, कदाचित् तु नटमल्लप्रेक्षादावीश्वरेच्छया एकीभवेयुरपि। न ह्येषामीश्वरेच्छातिरिक्तं निजं किमपि जीवितमस्ति,—इत्यसकृदुक्तं वक्ष्यते च॥ ९॥

यदुक्तमिदमित्यत्र प्रमेये व्यतिरेकिणि माता,—इति तत्र तत्प्रमेयं दर्शयति—

त्रयोविंशतिधा मेयं यत्कार्यकरणात्मकम्।
तस्याविभागरूप्येकं प्रधानं मूलकारणम्॥ १०॥

यत् कार्यकरणरूपं त्रयोविंशतिप्रकारं, यच्च तस्य मूलभूतं कारणं सर्वकार्यकरणाविभागरूपं प्रधानं नाम तत्सर्वं मेयम्,—इति सम्बन्धः। योगिमन्त्रतदीश्वरप्रभृतीनां हि भूततन्मात्रकरण-

कर देने के समान राग होता है और वह बुद्धि में होनेवाली आसक्ति नहीं है; क्योंकि वह स्थूल है, वृद्धजन की कामिनी में आसक्ति बढती ही जाती है चाहे काम करने को शक्ति भले ही न हो इस प्रकार वृद्धावस्था न भी हो किन्तु अनुराग तो देखा जाता है। अभिष्वङ्ग बुद्धि ऐश्वर्यादि धर्म अष्टक में भी देखा गया है। इसीमें क्यों आसक्ति होती है? इसलिए यह अर्थ नियति से नियमित होता है एवं कला, विद्या, काल, राग और नियति से ओतप्रोत होकर, जिसका ऐश्वर्य माया के द्वारा अपहृत हो जाता है अर्थात् समस्त ऐश्वर्य लूट जाने पर भी उसमें कुछ अंश को लेकर ऐसा ही परिमित प्रमाता के रूप में भासित होता हुआ, मैं इस समय कुछ जानता हुआ, कुछ करता हुआ संसक्त होकर इसीमें जो कि वह मैं स्वयं हूँ। इनकी भिन्न विषयता भी कभी-कभी हुआ करती है—जैसे जिससे अन्यत्र आसक्त होता हुआ भी नियति के कारण दूसरा कार्य कराया जाता है। ये सभी प्रमाताओं में ही संलग्न होकर भासित होते हैं, उसीकी शक्तिरूपवाले प्रत्येक प्रमाताओं में भिन्न-भिन्न रूपों में भासित होते हैं, कदाचित् नट-मल्ल इत्यादि की कला देखने के समान ईश्वर की इच्छा से दर्शकों की दृष्टि एकत्र हो जाती है। इनकी ईश्वर की इच्छा से भिन्न अपनी निजी इच्छा विशेष नहीं रहती है, इस विषय में हम अनेक बार कह चुके हैं, आगे भी कहेंगे॥ ९॥

प्रमेय में भिन्नरूप से प्रमाता रहता है—इस विषय में कह दिया गया है। अब उस प्रमेय को दिखाते हैं—

जो कार्य-कारणात्मक तैइस प्रकार के प्रमेय तत्त्व हैं। उनका संमिलितरूप एक प्रधान तत्त्व ही मूल कारण माना गया है॥ १०॥

जो कार्य-कारणरूप तैइस प्रकार के प्रमेय तत्त्व हैं जो कि समस्त कार्य-कारणभाव के अविभागरूप प्रधान ही उन प्रमेयों का मूलभूत कारण हैं यही इन सबका सम्बन्ध है। योगी, मन्त्र अर्थात् विद्येश्वर, ईश्वर-मन्त्रेश्वर और मन्त्र महेश्वर इत्यादिकों में प्रमेय तत्त्व ही रहते हैं; क्योंकि भूत तन्माएँ, इन्द्रियवर्ग, प्रधान-प्रकृति के वशीभूत हो जाने के कारण ये सब के सब प्रमेय कह-

प्रधानवशीकारयोगित्वात् सर्वमेव प्रमेयम्। संसारिणामप्यनुमानागमादिदिशा प्रमेयमेव,—इतीयत् प्रमेयम्। कालादयस्तु प्रमेया अपि प्रमातर्येव लग्नाः,—इति प्रमातृशक्तिस्वभावत्वात् न प्रमेयत्वेनेहावसरे मायाप्रमातृव्यतिरिक्तप्रमेयप्रस्तावात्मनि गणिताः। वस्तुतो हि अत्र योऽयं प्रमातापि स प्रमेय एव, स तु प्रमात्रीक्रियमाण आच्छादितप्रमेयताक इहोच्यते ॥ १० ॥

नन्वत्र त्रयोविंशतौ किं कार्यं किं करणम् ? इत्याशङ्क्याह—

त्रयोदशविधा चात्र बाह्यान्तःकरणावली ।
कार्यवर्गश्च दशधा स्थूलसूक्ष्मत्वभेदतः ॥ ११ ॥

प्रमातुः पूर्वं करणोपयोगः,—इत्यत्रादौ त्रयोदश करणानि; तत्र बुद्धिरध्यवसायसामान्यमात्ररूपा, ग्राह्यग्राहकाभिमानरूपोऽहंकारः, सङ्कल्पादिकारणं मनः,—इत्यन्तःकरणं त्रिधा। बुद्धौ शब्दाद्यध्यवसायरूपायामुपयोगीनि बुद्धीन्द्रियाणि पञ्च—श्रोत्रं, त्वक्, चक्षुः, जिह्वा; घ्राणम्,—इति। कर्मणि तूपयोगीनि पञ्च कर्मेन्द्रियाणि। तथा हि—त्यागो ग्रहणं द्वयम्,—इति बहिर्विषयं यत् तत्र पाणिः पायुः पादः,—इति करणानि। एतदेवान्तः प्राणे येन क्रियते तद्वा-

लाते हैं। सांसारिक जीवों की भी अनुमान एवं आगम शास्त्र के द्वारा प्रमेयता सिद्ध होती है, इतने तक प्रमेय तत्त्व की सीमा है। कालादि भी तो प्रमेय तत्त्व के अन्तर्गत हैं किन्तु प्रमाता में मिले हुए रहते हैं, इसलिए वे सभी प्रमातृ-शक्ति के स्वभाववाले होने के कारण प्रमेयरूप से इस माया प्रमाता से व्यतिरिक्त प्रमेय के प्रस्ताव में नहीं गिने गये हैं। वस्तुतः इसमें जो प्रमाता है वह भी प्रमेय ही है, प्रमेयता से आच्छादित कर देने के कारण उसे प्रमाता बना दिया जाता है ॥ १० ॥

अब शङ्का करते हैं कि इन तैइस प्रकार के प्रमेय तत्त्वों में कौन कार्य है और कौन करण कहलाते हैं ? इस आशङ्का के समाधान के लिए कहते हैं—

पञ्चज्ञानेन्द्रिय, पञ्चकर्मेन्द्रि, मन, बुद्धि और अङ्कार इन तेरह को करण कहते हैं। पञ्चमहाभूत, पञ्चतन्मात्राएँ स्थूल-सूक्ष्म के भेद से ये दस प्रकार के कार्य हैं ॥ ११ ॥

सर्वप्रथम प्रमाता करण अर्थात् इन्द्रियों का उपयोग करता है; इसी कारण इसमें पहले तेरह प्रकार के करण का ही निरूपण किया गया है। निश्चय करना बुद्धि का धर्म माना जाता है, ग्राह्य [ प्रमेय और ग्राहक प्रमाता ] में अभिमान करना अहङ्कार का लक्षण है, संकल्प-विकल्प करना मन का धर्म है, इस प्रकार इन तीनों को लेकर अन्तःकरण कहा जाता है। बुद्धि में शब्दादि ज्ञान का निश्चय करनेवाली पञ्चज्ञानेन्द्रियाँ हैं इनका नाम जैसे श्रोत्र, त्वक्, नेत्र, रसना और घ्राण हैं। कर्म में उपयोगी होने के कारण कर्मेन्द्रियाँ भी पाँच प्रकार की होती हैं। देखिये—त्याग करना एवं ग्रहण करना ये दोनों बाहरी विषय कहलाते हैं जो हस्त, पायु और पाद

---

१. इस प्रकार पुरुष की दो करणेन्द्रियाँ रहती हैं ज्ञान में विद्या और क्रियायें कला। अत एव अन्धे व्यक्ति में ज्ञान नहीं रहता और पङ्गु में क्रिया का अभाव रहता है।

विद्यातत्व के बिना इन्द्रियवर्ग की अपनी स्वयं की कार्य इत्यादि संपादन में कुछ भी गति नहीं हो सकती है और कला के बिना उसमें कर्तृत्व-शक्ति एवं ज्ञातृत्व-शक्ति का भी उद्भव नहीं हो सकता। इसलिए पुरुषों में मुख्यरूप से तो विद्या और कला को ही इन्द्रियकरण माना गया है।

गिन्द्रियम्। तत्प्रक्षोभप्रशान्त्या विश्रान्तिक्रियोपयोगी उपस्थः। सर्वदेहव्यापकानि च कर्मेन्द्रियाण्यहङ्कारविशेषात्मकानि। तेन च्छिन्नहस्तो बाहुभ्यामादधानः पाणिनैवादत्ते, एवमन्यत्। केवलं तत्तत्स्फुटपूर्णवृत्तिलाभस्थानत्वात् पञ्चाङ्गुलिरूपमधिष्टानमस्योच्यते,—इत्येवं करणानि त्रयोदश। एषां च कार्यत्वेऽप्यसाधारणेन कारणत्वेन व्यपदेशः। स्थूलं कार्यं पृथिवी, आपः, तेजो, वायुः, नभः,—इति पञ्च भूतानि। सूक्ष्ममेषामेव रूपं, गन्धो, रसो, रूपं, स्पर्शः, शब्द,—इति। तत्रैकैकगुणमाकाशादि, एकैकवृद्धगुणं वा,—इति दर्शनभेदः,—इति न विवेचितोऽनुपयोगात्। तत्र स्थूलं विभक्तमविभागस्यानुमापकम्,—इति स्थूलरूपोपक्रममुक्तम्। तत्र पृथिव्याद्याभासा एव मिश्रीभूय घटादिस्वलक्षणीभूताः कर्मेन्द्रियैरुपसर्पिता, बुद्धीन्द्रियैरालोचिता, अन्तःकरणेन सङ्कल्पिताभिमतनिश्चितरूपा, विद्यया विवेचिताः, कलादिभिरनुरञ्जिताः, प्रमातरि विश्राम्यन्ति,—इति तात्पर्यम्। एतच्च विस्तरस्तत्प्रधानेषु तन्त्रालोकसारादिषु मया निर्णीतम्,—इतीहानुपयोगान्न वितानितम्,–इति शिवम्॥ ११॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीकोपेतायामागमाधिकारे तत्त्वनिरूपणाख्यं प्रथममाह्निकम्॥ १॥

●

हैं वे तीनों इन्द्रियाँ करण कही जाती हैं। इसीको दिखाते हैं—भीतर प्राण को रोक कर जिससे बोला जाता है वही वागिन्द्रिय है। जिसके द्वारा प्रक्षोभ और प्रशान्त क्रिया होती हो उसे उपस्थ इन्द्रिय कहा जाता है और सारे शरीर में व्यापकरूप से रहनेवाली अहङ्कार से युक्त कर्मेन्द्रियाँ कहलाती हैं। इसलिए हस्त के कट जाने पर भी बाहु से लेनेवाला हाथ से ही लिया है—ऐसा कहा जाता है। स्पष्टरूप से ग्रहण तो पाँच अङ्गुलियों के रहने पर ही होता है अतः इसका अधिष्ठान पञ्च अङ्गुलीरूप माना जाता है, इस प्रकार ये तेरह करण कहे जाते हैं। इनमें कार्यता रहने पर भी असाधारणतया करणरूप से व्यपदेश किया जाता है। इसका स्थूल कार्य पृथिवी, जल, तेज, वायु और गगन है इस प्रकार पञ्च महाभूत हुए, इनके सूक्ष्मरूप को कहते हैं—यथा गन्ध, रस, रूप, स्पर्श और शब्द हैं। इनमें आकाशादि एक गुणवाले हैं किसी-किसी दर्शन में क्रमशः एक-एक बढते भी जाते हैं। यथा आकाश में एक शब्द ही मात्र गुण रहता है, वायु में शब्द और स्पर्श दो गुण हैं, तथा तेज में शब्द, स्पर्श और रूप ये तीन गुण रहते हैं, जल में शब्द, स्पर्श, रूप और रस चार गुण रहते हैं। पृथिवी में शब्द, स्पर्श; रूप, रस और गन्ध ये पाँच गुण रहते हैं। इस सम्बन्ध में यहाँ पर अधिक विवेचन अनुपयोगी होने के कारण नहीं किया गया है। इसमें स्थूलरूप का विवेचन इसलिए किया गया है कि इसका विभाग करना अविभाग का अनुमापक होता है, इसी कारण स्थूलरूप का उपक्रम बता दिया है। पृथिवीरूप स्थूल भाग आपस में मिल करके घटादिरूप वस्तु का निर्माण करता है जो कि कर्मेन्द्रिय से होकर ज्ञानेन्द्रियों से समझ कर, अन्तःकरण से संकल्प किया हुआ अभीष्ट निश्चितरूपवाला, विद्या से विवेचन किया हुआ, कलाओं से अनुरञ्जित, प्रमाता में परम विश्रान्ति लेते हैं, यही इसका आशय है। इसका अधिक विस्तारपूर्वक विवेचन मैंने तन्त्रालोकसार आदि ग्रन्थों में किया है, अतः इस स्थल में विस्तार के साथ वर्णन करना अनुपयोगी होने से नहीं किया है। शिवम्॥ ११॥

प्रथम आह्निक समाप्त

## अथ तृतीये आगमाधिकारे प्रमातृतत्त्वनिरूपणाख्यं
### द्वितीयमाह्निकम्

अखण्डितस्वभावोऽपि विचित्रां मातृकल्पनाम्।
स्वहृन्मण्डलचक्रे यः प्रथयेत्तं स्तुमः शिवम्॥

एवं तत्त्वराशौ निर्णीते एतदन्तर्भाविनोक्तमपि मुख्यतया निर्णेतव्यं प्रमातृतत्त्वं वितत्य निर्णेतुं 'तत्रैतन्मातृतामात्र' इत्यादि 'व्यानो विश्वात्मकः परः' इत्यन्तैर्विंशतिश्लोकैराह्निकान्तरं प्रस्तूयते। तथाहि—प्रमातुरत्र स्वरूपप्रत्यभिज्ञानमुपदिश्यते शास्त्रे। स हि हेयमुपादेयं च स्वं स्वभावं विद्वान् परमोपादेयरूपं शिवस्वभावं स्वात्मनमभेदेनाविशन् जीवन्नेव मुक्तो भवति,—इति। तत्र श्लोकेन ब्रह्मादित्रयस्वरूपम्, ततोऽपि द्वयेन हेयोपादेयप्रमातृतत्त्वम्, ततस्तदुपयोगिमलस्वरूपं, तत्कृतं च प्रमातृभेदं श्लोकसप्तकेन, द्वयेन समावेश स्वरूपं श्लोक पञ्चकेन प्रमातुरेव सुषुप्ताद्यवस्थाः, त्रयेण तासां हेयोपादेयविभागं निरूपयति,—इत्याह्निकतात्पर्यम्। ग्रन्थार्थस्तु निरूप्यते—

तत्रैतन्मातृतामात्रस्थितौ रुद्रोऽधिदैवतम्।
भिन्नप्रमेयप्रसरे ब्रह्मविष्णू व्यवस्थितौ॥ १॥

तत्रेति, एवंभूतेऽस्मिन्नागमसिद्धे युक्त्यनुगते च तत्त्वस्वरूपे सति यदेतत् कालादिपञ्चक-वेष्टितं प्रमातृतारूपं, तदेव यस्यां शुद्धमुपसंवृतप्रमेयजातं भवति दशायां संहाराख्यायां तस्यामधि-

जो हृदय कमल चक्र [ परावाग्रूप ] में अखण्डित स्वभाववाले परम शिव विचित्र-चित्ररूप से प्रमाताओं की भाँति प्रकट हो जाते हैं, हम उस शिव की स्तुति करते हैं।

इस प्रकार तत्त्वराशि प्रमेयरूप से निर्णय कर लेने पर इसके अन्तर्भाव में कहा गया भी मुख्यरूप से निर्णय करना चाहिए, प्रमातृतत्त्व का भी विस्तारपूर्वक निर्णय करने के लिये 'तत्रैतन्मातृतामात्र' इत्यादि से लेकर 'व्यानो विश्वात्मकः परः' यहाँ तक बीस श्लोकों से दूसरे आह्निक का प्रस्ताव करते हैं। जैसा कि इस प्रत्यभिज्ञा शास्त्र में प्रमाता के अपने स्वरूप की पहचान करने के लिए उपदेश दिया जाता है; क्योंकि वह हेय एवं उपादेयरूप अपने-अपने स्वभाव को जानता हुआ, परम उपादेयरूप शिवभाव को अपने में अभेदपूर्वक समझता हुआ जीवन्मुक्त हो जाता है। प्रथम श्लोक से ब्रह्मा, विष्णु और रुद्र इन तीनों देवों के स्वरूप का वर्णन किया जायेगा, इसके पश्चात् दो श्लोकों से हेय-उपादेयरूप से प्रमातृतत्त्व के विषय में कहेंगे। इसके बाद सात श्लोकों से उस प्रमातृतत्त्व में जो उपयोगी मल का स्वरूप और उसके द्वारा होनेवाले प्रमाताओं में भेदों का विवेचन किया जायगा। अनन्तर दो श्लोकों से समावेश अर्थात् समाधि अवस्था का स्वरूप बतायेंगे। इसके बाद पाँच श्लोकों से प्रमाता की सुषुप्ति अवस्थाओं अर्थात् उन अवस्थाओं के विषय में विवेचन करेंगे। इसके पश्चात् तीन श्लोकों से हेय-उपादेयता का विभाग प्रस्तुत किया जायेगा, यही इस आह्निक का आशय है। अब ग्रन्थ के अर्थ का निरूपण करते हैं—

इस प्रकार केवल प्रमातृता की स्थिति में भगवान् रुद्ररूप से अधिष्ठातृदेव रहते हैं। भिन्न-भिन्न रूपों में प्रमेयतत्त्व के विस्तार होने पर तो ब्रह्मा और विष्णु की व्यवस्था की जाती है॥ १॥

'तत्रेति' इससे यह अर्थ प्रकट होता है कि आगमसिद्ध तत्त्व स्वरूप की युक्तिपूर्वक सिद्धि हो जाने पर जो यह कालादि पञ्चक से प्रमाता का स्वरूप आवेष्टित है, वही जिसमें प्रमेयस्वरूप

ष्ठातृदेवतात्वं तद्दशासंपादनेन स्वोपासकलोकस्य तद्दशाध्यानावेशसमापन्नस्य स्वाभिमुख्यसंपादनेन च भजमानो भट्टारक ईश्वर एव रुद्रो भगवान्, यो मायापदेऽपि प्राणापानात्मकधर्माधर्मसूर्येन्दु-दिननिशादिमुक्तमध्यमज्योतीरूपप्रमातृस्वरूपस्पर्शाद् उन्मीलिततृतीयनेत्रो, भिन्नस्य तु प्रमेयस्य 'प्रसरे' संपादनेऽधिष्ठातृदेवतात्वं भजन् ब्रह्मा, प्रसृते भिन्ने प्रमेये तत्संतानप्रवहणलक्षणे प्रसरेऽधि-ष्ठातृदेवता विष्णुः, अत एव तयोः प्रमेयप्रसररूपस्य 'इदं नीलम्' इत्येवं प्रकाशात्मनः प्राधान्यात् 'अहम्' इति प्रमातृदशावेशशून्यत्वात् न तृतीयनेत्रोन्मीलनम् । देवतैव दैवतम् । 'प्रसर' उत्पत्तिः संतानश्च ॥ १ ॥

शुद्धरूप से उपसंहृत रहता है और संहार अवस्था में अधिष्ठातृदेवता तत्त्व अपनी अवस्थिति के सम्पादन से अपने उपासक लोगों को उस समावेश-समाधि अवस्था की प्राप्ति करने के लिए और अपनी ओर उन्मुख करने से तो सेव्य भट्टारक ईश्वर ही रुद्ररूप से अधिष्ठाता हैं। जो कि मायापद में भी प्राण एवं अपानरूप, सूर्य-चन्द्ररूप, धर्म-अधर्मरूप, रात्रि-दिनरूप इत्यादि से विभाग रहित रहते हैं। उस महाव्योम स्वरूप में प्रमाताओं का अनुप्रवेश कर लेने मात्र से तृतीय तेत्र का उन्मीलन हो जाता है, प्रमेयतत्त्व का भिन्न रूप में विस्तार हो जाने पर तो इसके सम्पादन करने के लिए ब्रह्मा अधिष्ठातृदेव के रूप में रहते हैं, प्रमेयतत्त्व के प्रसृत हो जाने पर भिन्न भिन्नरूप से, उसके समूह बढने लगते हैं तब अधिष्ठातृदेव विष्णु होते हैं। अत एव उन दोनों का प्रमेय विस्तार 'इदं नीलम्' इसमें प्रकाशरूप के प्राधान्य होने के कारण, 'अहम्' इस प्रमातृ दशा की समावेशता में शून्यरूपता होने के कारण तृतीय नेत्र का विकास नहीं होता है। देवता का भाव ही दैवत है। 'प्रसर' शब्द को उत्पत्ति एवं सन्तान अर्थ में लिया गया है॥ १॥

---

१. अत एव प्रपञ्च के गल जाने पर बुद्धि गुण का परम ऐश्वर्य विनष्ट हो जाता है; विनष्ट हो जाने का अर्थ यह है कि उसका दब जाना है न कि अत्यन्त अभाव हो जाना है—

तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यानावृतः ॥

उस महा आकाश में पहुँचने पर चन्द्रमा और सूर्य ये दोनों ही उसमें प्रलीन हो जाते हैं, प्रबुद्ध साधक को उस दशा में कुछ भी विक्षेप-आवरणादि नहीं होते हैं, किन्तु अज्ञानी लोगों के लिए तो उस अवस्था में भी सुषुप्त-पद के समान अत्यन्त गाढ अन्धकार अवस्था में पड़े हुए जैसी स्थिति रहती है।

२. जैसे जागर अवस्था में ब्रह्मा हृदयकमल नाल से उत्पन्न होने के कारण कमलासन कहे जाते हैं इसलिए प्रथम क्षण में उस भाव का आभास रहता है। विष्णु तो स्मृति अवस्था में एवं स्वप्न अवस्था में भी रहते हैं इसलिए पालक कहे जाते हैं। मध्यमा-वैखरीरूप का उल्लासपद, परमेश्वर से लेकर पशु प्रमाता तक प्रामातृवर्ग कण्ठभूमि में वर्तमान रहता है; क्योंकि हृदय में प्रथम पश्यन्ती प्रसरात्मक के प्रतिभास-रूप होने के कारण प्रथम सृष्टि होती है। इसका स्पन्द शास्त्र में उल्लेख किया है—

यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान् ।

जिसकी अभी अपने स्वरूप की पूर्ण भाव से अभिव्यक्ति नहीं हुई है, जाग्रत दशा में अपनी इच्छा के अनुकूल, कोई विशेष अभीष्ट वस्तु नहीं दियाखी देती है, फिर क्यों न उसके सामने पदार्थों का ढेर ही हो ? इसीलिए अन्तर्हृदय में विद्यमान धाता चिद्रूप उस साधक के हृदय में सोम एवं सूर्य का

यदेतन्मातृतामात्रमुक्तं तस्य विभागमागमिकं च संज्ञाभेदं निरूपयति—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः ।
विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥ २ ॥
स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।
मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः ॥ ३ ॥

माययान्धो विमोहितः, अत एव कर्माणि स्वात्मनो बन्धकान्यभिमन्यमान 'एष' इति कालादिवेष्टितः शून्यादिप्रमाता संसरति,—इत्यतः संसारी । देहोऽपि हि स्वरूपसादृश्यं बाल्ययौवनादिष्वनुवर्तयन् संसरतीव । बुद्ध्यादेस्तु जन्मान्तरेऽपि संसरणम् । विद्यया तु स्वरूपप्रकाशनशक्त्या प्रत्यभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव शरीराद्यपि विश्वमपि संवेदनमेवाभिमन्यमानोऽत एव चिदेव घना अन्याचिद्रूपव्यामिश्रणशून्या यस्य रूपं, स पुनर्जन्मबन्धविरहात् देहेऽपि स्थिते 'मुक्त' इति व्यपदेशयोग्यः पतिते तु शिव एकघनः,—इति कः कुतो मुक्तः । भूतपूर्वगत्या तु

यह जिसमें प्रमातृरूपता मात्र कह दिया गया है उसका आगमिक विभाग और संज्ञाभेद से निरूपण करते हैं—

यह माया से अन्धा होकर प्रमाता कर्म-बन्धन में बद्ध जाता है अतः संसारी जीव हो जाता है। जब विद्या के द्वारा अपने आत्मरूप ऐश्वर्य के समझ लेने पर तो चिद्रूप जीवन् मुक्त कहलाता है ॥ २ ॥

वही प्रमाता अपने अङ्गरूप पदार्थों का स्वामी कहलाता है । माया के द्वारा इन पदार्थों के भेद हो जाने पर क्लेश-कर्मादि से कलुषित होकर पशु [ जीव ] बन जाता है ॥ ३ ॥

माया से अन्धा होकर यह प्रमाता विमोहित हो जाता है, इसीलिए कर्मों को बन्धनरूप मानता हुआ । 'एष' यह प्रमाता कालादि पञ्च कञ्चुकों से आवेष्टित होकर शून्यादि संकुचितरूप में संसरण करता है, इसी कारण यह संसारी जीव हो जाता है; क्योंकि शरीर भी स्वरूपसादृश्यता को ग्रहण करता हुआ, बाल्य, यौवनादि अवस्थाओं में रहता हुआ संसरण-विचरण करता सा दिखायी देता है । स्वरूप को प्रकाशित करनेवाली विद्या-शक्ति के द्वारा जिसने प्रत्यभिज्ञारूप ऐश्वर्य प्राप्त कर लिया है, इसी कारण शरीरादि विश्वमात्र को संवेदनमय मानता हुआ, अतः चिद्रूप में ही स्थिर रहता हुआ जिसका स्वरूप अचिद्रूप के मिश्रण से शून्य हो गया है, वह तो जन्म-मृत्यु से रहित होकर देहादि में रहता हुआ भी 'जीवन्मुक्त' कहलाता है । शरीर पात

---

उदय करा देता है अर्थात् उसकी ज्ञानेन्द्रियों में जो वधनात्मक नहीं है ऐसी तीव्र गतिशील शक्ति का प्राकट्य करा देते हैं तथा अपने अभीष्ट वस्तुओं के दर्शन जाग्रत काल में भी करा देते हैं जिसको देखने की साधक को तीव्र इच्छा बनी है ।

रुद्र अवस्था तो समस्तवाद के उपसंहारात्मक अनाहत परावाग्रूप के अनुप्रवेश करने पर प्रारम्भ भूमि तालु में सब का उपसंहार करनेवाली होने से सुषुप्त अवस्था कही जाती है, इसी कारण ब्रह्मा का हृदय स्थान है, विष्णु का कण्ठ स्थान है, रुद्र का तालु में निवास स्थान है, ईश्वर का भ्रूमध्य भाग में निवास स्थान है तथा सदाशिव का ब्रह्मरन्ध्र के ऊपर निवास है, अनाश्रितात्मक-शक्ति सोपान के ऊपरी भाग में इन छः कारण धारी परमेश्वर के पद हैं ।

